अतींद्रिये इंद्रियागोचरे । स्वात्मनि स्वस्वरूपे धर्मस्वरूपे इत्यर्थः । धर्मस्वरूपं हि न केनापि इंद्रियेण ग्राह्यं भवति । दुःष्क्रियः दुष्कर्मा अयं जनः योजयितुं प्रवर्तयितुं मया न शक्यः । इतीव धर्मेण सूक्ष्मां अणुतरां स्वप्रकृतिं स्वस्वरूपं विहाय त्यक्त्वा साक्षात् स्वमूर्तिः धर्ममूर्तिः विहिता । मायादेवी धर्मस्य मूर्तिरेवेत्यर्थः । एतेन तस्याः सदाचारसंपन्नत्वं धर्मनिष्ठत्वं च द्योतितम् ॥ १८ ॥

च्युतोऽथ कायात्पुष्पितात् त्रिलोकीमुद्योतयन्नुत्तमबोधिसत्त्वः ॥
विवेश तस्याः स्वत एव कुक्षौ । नन्दागुहायामिव नागराजः ॥१९॥

अथ पुष्पितात् पुष्टात् कायात् । अर्थात् शुद्धोदनस्येति गम्यते । च्युतः बीजरूपेण निर्गतः उत्तमः बोधः उत्तमज्ञानं तदस्यास्तीति उत्तमबोधि एतादृशं सत्वं चित्तं यस्य महाज्ञानीत्यर्थः । "सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वे व्यवसायासु चित्तेषु" इति मेदिनी । नागराजः हस्तिश्रेष्ठः नंदागुहायां गौर्युदरे इव । "नंदा स्यादलिंजरे । गौर्यां तिथिविशेषे स्त्री" इति मेदिनी । तस्या मायादेव्याः कुक्षौ स्वत एव विवेश । परमदयालुत्वात् पूर्वं शुद्धोदनस्य देहे प्रविश्य अनंतरं बीजरूपेण तस्या उदरे स्वत एव प्रविवेशेत्यर्थः ॥ १९ ॥

धृत्वा हिमाद्रिधवलं गुरुं षड्विषाणं ।
दानाधिवासितकरं हि गजस्य रूपम् ॥
शुद्धोदनस्य वसुधाधिपतेर्महिष्याः ।
कुक्षिं विवेश स जगद्व्यसनक्षयाय ॥ २० ॥

षड्विषाणं षड्दन्तम् । दानाधिवासितमुखं मदशोभितवक्त्रं । हिमाद्रिः हिमालयः स इव धवलं शुभ्रं हिमाद्रितुल्यं शुभ्रमित्यर्थः ॥ २० ॥

रक्षाविधानं प्रति लोकपाला ।
लोकैकनाथस्य दिवोऽभिजग्मुः ॥
सर्वत्र भान्तोऽपि हि चन्द्रपादा ।
भजन्ति कैलासगिरौ विशेषम् ॥ २१ ॥

रक्षाविधानं प्रति रक्षणकरणं प्रति तदुद्दिश्येत्यर्थः । लोकैकनाथस्य मायादेव्युदरप्रविष्टस्य भगवतः हि सर्वत्र भान्तोऽपि चंद्रपादाः चंद्रकिरणाः कैलासगिरौ विशेषं भजंति । महतां अपि समयविशेषेण स्वापकर्षं सापेक्षत्वं भवतीत्यर्थः ॥ २१ ॥

मायापि तं कुक्षिगतं दधाना । विद्युद्विलासं जलदावलीव ॥
दानाभिवर्षैः परितो जनानां । दारिद्र्यक्लेशं शमयाञ्चकार ॥ २२ ॥

जलदावलीव मेघपंक्तिरिव । दानाभिवर्षैः वितरणवर्षणैः ॥ २२ ॥

---

१ J गर्भे. २ C ॰पुष्पितात् J ॰पुष्पितभिभूमद्युद्योदयन् लोकमिमं सभासा ॥. ३ C स्मृत. ४ A शुभ्रदिशा॰ ५ C ॰भिरनुगं हिरदस्य रूपम्. ६ J रक्षार्थमस्यानुगतो दिशानां नाथाः स्वनाथस्य किल स्थितम् ॥. ७ J भवन्ति. ८ J विशेषः A विशेषे. ९ C ॰रदिनरं

इंद्रप्रतिमस्य इंद्रतुल्यस्य मांधातुः कुक्षेः उदरैकदेशात्। कथंवितः क्षपिविशेषस्य भुजसंबंधि योऽमदेशः तस्मात्। इमानि आख्यानानि पुराणेषु प्रसिद्धानि तत एव द्रष्टव्यानि ॥ २९ ॥

**क्रमेण गर्भादभिनिर्गतः सन् । बभौ च्युतः खादिव योऽन्यजातः॥**
**कल्पेष्वनेकेष्वपि भावितात्मा । स संप्रजानन्सुषुवे नमूर्द्धः ॥३०॥**

न मूढः नमूढः नैकधेत्यादिवत् न शब्देन सुप्सुपेति समासः। न शब्दस्य च निरोधार्थकत्वेन मूढविरुद्धः ज्ञानीति यावत्। अनेकेषु कल्पेषु संवर्तेषु शास्त्रेषु वा "कल्पः शास्त्रे विधौ न्याये" इति मेदिनी। भावितात्मा भावितो वासितः आत्मा अंतःकरणं यस्य अनेककल्पकारीत्यर्थः सकलशास्त्रवेत्ता वा अतएव संप्रजानन् इव योन्युत्पत्तिदुःखं जानन्निव अस्य जन्मादिषड्विकाराभावात् इव शब्दोपादानं। वस्तुतः योनिजोत्पत्त्यादि दुःखमस्य नास्तीति यावत्। अतएव योन्यजातः एतादृशः सुषुवे क्रमेण गर्भात् अभिनिर्गतः सन् खाच्च्युत इव बभौ ॥ ३० ॥

**दीप्त्या च धैर्येण श्रियां रराज । बालो रविर्भूमिमिवावतीर्णः ॥**
**मयेति दीप्तोऽपि निरीक्ष्यमाणो । जहार चक्षूंषि यथा शशाङ्कः॥३१॥**

दीप्त्येति। अनेन श्लोकोत्तरार्धेन अस्य प्रतापोऽपि लोकानामाल्हादक एव न तु पीडक इति सूचितं। अस्मिन्पद्ये 'धैर्येण श्रिया' इत्यत्र णकारस्य गुरुत्वं न दोषाय। तदुक्तं छंदप्रकाशे 'यदा तीव्रप्रयत्नेन संयोगादेरगौरवं। न छंदोभंग इत्याहुस्तददोषाय सूरयः' इति। अतएव 'प्राप्तनाभिह्रदमज्जनमाशु' इति माघे ॥ ३१ ॥

**स हि स्वगात्रप्रभयोज्ज्वलन्त्या। दीपप्रभां भास्करवन्मुमोष॥**
**महार्हजाम्बूनदचारुवर्णो। विद्योतयामास दिशश्च सर्वाः ॥ ३२॥**

महार्हं महामूल्यं अत्युत्तममिति यावत् यत् जांबूनदं सुवर्णं तद्वत् चारुः सुंदरो वर्णो यस्य ॥ ३२ ॥

**अनाकुलान्यब्जसमुद्गतानि। निष्पेषवन्त्यायतविक्रमाणि॥**
**तथैव धीराणि पदानि सप्त। सप्तर्षितारासदृशो जगाम ॥ ३३॥**

सप्तर्षिसंघोज्ज्वलभगद्गमः सप्तर्षिनक्षत्रपुंजतुल्यः अनेन तेजस्विता सूचिता। सप्तपदानि जगामेत्यन्वयः। पदशब्दोऽत्र लक्षणया पादन्यासपरः।'कालाध्वनोरत्यंतसंयोगे' इति द्वितीया। सप्तसंख्याकपादन्यासपर्यंतं जगामेत्यर्थः। देवदत्तो दश पदानि गतः इति यावत् लोके प्रसिद्धोयं प्रयोगः। पदानि विशिनष्टि अनाकुलानीत्यादिना। अनाकुलानि अव्यग्राणि। अब्जवत् कमलवत् समुद्गतानि भूमी

१ C नि मृगः. २ C गतः. ३ J ०भिरु. ४ C यः. A प्रसो न. ५ J सुषुवे न मीढ्मन्. ६ C न मृद. ७ A रराज स्वस्या. ८ C कथा. ९ C ०ल्न्त्या. १० C दीपप्रभाम्. ११ C ०भिरम.

अंकितानि निष्पेषवंति पादलिप्तालक्तादिचूर्णवंति आयतः दीर्घः विक्रमः न्यासो येषां तानि धीराणि गंभीराणि ॥ ३३ ॥

बोधाय जातोऽस्मि जगद्धितार्थ-
मन्त्या ममोत्पत्तिरियं धरित्र्याम् ॥[१]
चतुर्दिशं सिंहगतिर्विलोक्य ।
वाणीं स भव्यार्थकरीमुवाच ॥ ३४ ॥

जगद्धितार्थं बोधाय जगद्धितफलकज्ञानायेत्यर्थः । अन्त्या चरमा । इतःपरं अवतारा भावात् । अतः न लाभाय सर्वैः झटिति यतितव्यं । चतसृणां दिशां समाहाः चतुर्दिशं । भव्यार्थकरीं कुशलार्थप्रतिपादिकामित्यर्थः । इति बोधाय जातोऽस्मि । मम इयं उत्पत्तिरंत्या इत्याकारिकां वाणीं उवाचेत्यर्थः ॥ ३४ ॥

खात्प्रसृते चन्द्रमरीचिशुभ्रे । द्वे वारिधारे शिशिरोष्णवीर्ये ॥
शरीरसौख्यार्थमनूपमस्य । निपेततुर्मूर्धनि तस्य दिव्ये ॥ ३५ ॥

शिशिरोष्णे वीर्ये गुणधर्मोऽस्ते । अनुत्तरस्य नास्ति उत्तरः श्रेष्ठो यस्मात् तस्य ॥ ३५ ॥

श्रीमद्विताने कनकोज्ज्वलांगे । वैदूर्यपादे शयने शयानम् ॥
बुद्धं विपश्यन्नथ पद्महस्तो यक्षेश्वरः संमुदितः स तस्थौ ॥ ३६ ॥

श्रीमद्विताने महार्होल्लोचे । कनकवत् कनकेन वा उज्ज्वलानि अंगानि यस्य तस्मिन् । वैदूर्याणां रत्नविशेषाणां पादः तस्मिन् वैदूर्यमणिखचितपादे ॥ ३६ ॥

मायातनूजस्य दिवौकसः खे । यस्य प्रभावात्प्रणतैः शिरोभिः ॥
आधारयन् पांडुरमातपत्रं । बुद्धार्थे जेपुः परमाशिषश्च ॥ ३७ ॥

मायातनूजस्य मायादेवीपुत्रस्य । यस्य शुद्धोदनपुत्रस्य प्रभावात् प्रतापात् प्रणतैः शिरोभिः दिवौकसः खे पांडुरं आतपत्रं आधारयन् । बुद्धाय शौद्धोदनाय परमाशिष जेपुश्च इत्यन्वयः ॥ ३७ ॥

महोरगा धर्मविशेषतर्षाद्बुद्धेष्वतीतेषु कृताधिकाराः ।
यं व्याजयन् भक्तिविशिष्टचित्ता । मंदारपुष्पैः समवाकिरंश्च ॥ ३८ ॥

धर्मविशेषः पुण्यविशेषः तस्य तर्षः तृष्णा इच्छेति यावत् । अतीतेषु अतिक्रान्तेषु बुद्धेषु कृताधिकाराः एतादृशाः महोरगाः यं व्याजयन् च मंदारपुष्पैः समवाकिरन् ॥ ३८ ॥

---

१ C तयो २ C ममेति. ३ C च ४ C मनुत्तरस्य; A मनुत्तम०. ५ C सौम्ये. ६ C ०ज्वल. ७ C द्दृ. ८ A स्त्री. यत्रीरवालव्यजनपद्म० A इस्ता यक्षश्री संमुदितास्तस्थे J ०हस्त यक्षाधिपः संपरिवार्य तस्थुः. ९ J प्रतापानतमूर्धिभिश्च. १० C पाण्डुर. ११ C बोधाय. १२ C समव्यजन्. १३ ०विशिष्टेना.

तथागतोत्पत्तिगुणेन तुष्टाः । शुद्धाधिवासाश्च विशुद्धसत्त्वाः ।
देवा ननन्दुर्विगतेऽपि रागे । मग्नस्य दुःखे जगतो हितार्थे ॥३९॥

तथागतोत्पत्तिगुणेन बुद्धोत्पत्तिगुणेन । शुद्धे पवित्रे पुण्यप्राप्ये स्वर्गे इति यावत् । अधिकः वासो येषां । अतएव विशुद्धसत्वाः विशुद्धांतःकरणाः देवाः रागे प्रेम्णि विगतेपि तेषां पक्षपाताभावात् विरागित्वादेवमुक्तिः । दुःखे मग्नस्य जगतः हिताय ननंदुरित्यन्वयः । देवानां दयालुत्वात् दुःखाक्रांतजगदवमोचनाय देवा ननंदुरित्यर्थः ॥ ३९ ॥

यस्मिन्प्रसूते गिरिराजकीला । वाताहता नौरिव भूश्चचाल ।
सचंदना चोत्पलपद्मगर्भा । पपात वृष्टिर्गगनादनभ्रात् ॥ ४० ॥

यस्मिन्प्रसूते प्रादुर्भूते सति गिरिराजाः पर्वताः कीला इव यस्याः एतादृशी भूः भूमिः । सा हि पर्वतैरवष्टब्धेति पुराणेषु प्रसिद्धम् । अतएव ते भूधराः इति व्यपदिश्यन्ते । उत्पलपद्मे कमलविशेषे गर्भे यस्याः । अनभ्रात् अभ्ररहितात् । तज्जन्मनि अखिलं आश्चर्यकारकमासीदित्यर्थः ॥ ४० ॥

वाता ववुः स्पर्शसुखा मनोज्ञा ।
दिव्यानि सूनान्यवपातयन्तः ॥
सूर्यः स एवाभ्यधिकं चकासे ।
जज्वाल सौम्यार्चिरनीरितोऽग्निः ॥ ४१ ॥

स्पर्शसुखाः सुखः स्पर्शो येषां ते स्पर्शसुखाः । सुखस्पर्शा इत्यर्थः । आहिताग्न्यादित्वात्परनिपातः । सूनानि पुष्पाणि । " सूनं प्रसवपुष्पयोः" इति मेदिनी । अनीरितः अप्रेरितः अध्मात इति यावत् । महतां जन्मनि हि एतानि जायन्ते ॥ ४१ ॥

प्रागुत्तरे चावसथप्रदेशे ।
कूपः स्वयं प्रादुरभूत्सितांबुः ॥
अंतःपुराण्युद्गतविस्मयानि ।
यस्मिन्क्रियास्तीर्थ इव प्रचक्रुः ॥ ४२ ॥

आवसथस्य गृहस्य प्रदेशे । प्राचः उत्तरे प्रागुत्तरे प्रागित्यत्र अचेर्लुगिति अस्तातेर्लुक् लुक्तद्धितेति ङीपोलुक् । प्राच्याः दिशः उत्तरे भागे इत्यर्थः । "पूर्वादिभ्यो नवभ्यो वेति स्मिन्नादेशाऽभावः । अंतःपुराणि अंतःपुरगतस्त्रियः मंचाः क्रोशंतीतिवत् तात्स्थ्यात्ताच्छब्द्यं । यस्मिन् कूपे क्रियाः स्नानादिकाः । उद्गतविस्मयानि अतर्कितोत्पत्तेः संजाताश्चर्याणि ॥ ४२ ॥

१ C A ० गतस्यातिगु०— ०मार्द for सति. २ C हिताय. ३ A सोत्पलपद्मगर्भा. ४ C ०गता. ५ C वासीस्थ०. ६ C ०चकाशे. ७ C A ०याग्नि.

धर्मार्थिभिर्भूतगणैश्च दिव्यैस्तद्दर्शनार्थं भृशमाप पूरः ॥
कौतूहलेनैव च पादपैस्तां प्रपूजयामास सगन्धपुष्पैः ॥ ४३ ॥

धर्मार्थिभिः पुण्यार्थिभिः । भूतगणैः देवयोनिविशेषैः । पूरः कूपस्थजलपूर इत्यर्थः । कौतूहलेनैव विस्मयकारिभगवदवतारजन्यकौतुकेन । गंधपुष्पाणि गंधयुक्तपुष्पाणि । शाकप्रियपार्थिववत् समासः । गंधपुष्पैः सहिताः सगंधपुष्पाः तैः पादपैः वृक्षैः । यथा कश्चित् आप्तबांधवैः सह देवदर्शनादियात्रां करोति तत्रत्यं देवं स्वहस्तधृतपुष्पैः पूजयति च । एवमयं कूपस्थोदकपूरः भूतगणैः सह तत्रागत्य सतीरवर्तिपादपरूपहस्तधृतपुष्पैः तं पूजयामासेवेति तात्पर्यं ॥ ४३ ॥

पुष्पद्रुमाः स्वं कुसुमं पुफुल्लुः । समीरणोद्भ्रामितदिक्सुगंधं ॥
सुसंभ्रमद्भृंगवधूपगीतं । भुजंगवृंदेन च पीतवातं ॥ ४४ ॥

कुसुममिति जात्येकवचनं कुसुमानीत्यर्थः पुफुल्लुः प्रादुर्भावयांचक्रुः।अत्र फुल्लधातुरंतर्भावितण्यर्थः । समीरणेन उद्भ्रामितं प्रसारितं दिक्षु सुगंधो यस्य । सुसंभ्रमंत्यः इतस्ततो हिंडंत्यः या भृंगवध्वः तासां उपगीतं गुंजारवो यस्मिन्।भुजंगवृंदेन हेतुना पीतः प्राशितः वातः वायुः येन ॥ ४४ ॥

क्वचित्क्वणत्तूर्यमृदंगगीतै-
वीणामुकुंदामुरजादिभिश्च ।
स्त्रीभिश्चलत्कुंडलभूषिताभि-
र्विराजितं चोभयपार्श्वतस्तत् ॥ ४५ ॥

तत् मायादेवीसुतोत्पत्तिस्थानं उभयपार्श्वतः उभयपार्श्वयोरित्यर्थः । उभौ च तौ पार्श्वौ च उभयपार्श्वौ तयो उभयपार्श्वत इत्यत्र आद्यादित्वात्तसि । विराजितं शोभितं केरिति अपेक्षायामाह । क्वचित् क्वणंति शब्दायमानानि यानि तूर्याणि मृदंगाः गीतानि च तैः विराजितं क्वचित् वीणा मुद्रका । यशःपटहः मुरजः एते आदयो येषां । चलत्कुंडलभूषिताभिः स्त्रीभिः क्वचित् विराजितं । न चात्र मृदंगमुरजयोः पौनरुक्त्यं शक्यं एकः क्वणन् अपरः केवलमेव आसीदित्यन्वयः ॥४५॥

यद्राजशास्त्रं भृगुरंगिरा वा ।
न चक्रतुर्वंशकरावृषी तौ ॥
तयोः सुतौ तौ च विचक्रतुस्त- ।
त्कालेन शुक्रश्च बृहस्पतिश्च ॥ ४६ ॥

पुत्रादिच्छेत्पराजयमितिन्यायेन क्वचित् पित्रादिभ्योऽपि पुत्रादयः विद्वांसो भवं-

१ C भृशमाप पूरः; A भृशमी पपार. २ पादपैश्च. ३ A पुष्पद्रुमाणां स्वकुसुमं पुफुल्ल. ४ भुजंगमन्तादिभिनाथाम. ५ C स्त्रीणा ६ C ०तानाम्. ७ C समजैतुः

तीति बोधनपूर्वकं अस्य माहात्म्यकथनार्थमनेकदृष्टान्तानाह—यद्राजशास्त्रमिति ।
नीतिशास्त्रं वंशकरौ तौ ऋषी कौ तौ भृगुः अंगिरा वा न चक्रतुः तत् नीतिशास्त्रं
तयोः भृग्वंगिरसोः सुतौ शुक्रः बृहस्पतिश्च विचक्रतुः ॥ ४६ ॥

सारस्वतश्चापि जगाद नष्टं ।
वेदं पुनर्यं ददृशुर्न पूर्वे ॥
व्यासस्तथैनं बहुधा चकार ।
न यं वसिष्ठः कृतवाञ्छक्तिः ॥ ४७ ॥
वल्मीकजातश्च ससर्ज पद्यं ।
जग्रंथ यन्न च्यवनो महर्षिः ॥
चिकित्सितं यच्च चकार नात्रिः ।
पश्चात्तदात्रेय ऋषिर्जगाद ॥ ४८ ॥

पूर्वे ऋषयः पराशराद्यः यं-वेदं न ददृशुः तं नष्टं वेदं सारस्वतः सरस्वतीचौरस्यः व्यासः एनं वेदं बहुधा जगाद। यं शक्तिः न कृतवान् तं वसिष्ठः चकार ॥ ४७ ॥ ॥ ४८ ॥

यच्च द्विजत्वं कुशिको न लेभे । तत्साधनं सूनुरवाप राजन् ॥
वेलां समुद्रे सगरश्च दध्रे । नैक्ष्वाकवो यां प्रथमं बबंधुः ॥ ४९ ॥

हे राजन् यत् द्विजत्वं कुशिकः एतन्नामकराजा न लेभे तत् सूनुः विश्वामित्रः अवाप प्राप । इक्ष्वाकवः इक्ष्वाकुवंशप्रसवाः यां वेलां समुद्रे प्रथमं न बबंधुः तां सगरः दध्रे ॥ ४९ ॥

आचार्यकं योगविधौ द्विजानामप्राप्तमन्यैर्जनको जगाम ॥
ख्यातानि कर्माणि च यानि शौरेः। शूराद्यस्तेष्वबला बभूवुः॥ ५० ॥

अन्यैः अप्राप्तं एतादृशं योगविधौ द्विजानां यत् आचार्यकं आचार्यत्वं तत् जनको जगाम । शौरेः श्रीकृष्णस्य यानि ख्यातानि कर्माणि तेषु शूराद्यः अवला असमर्था बभूवुः ॥ ५० ॥

तस्मात्प्रमाणं न वयो न कालः ।
कश्चित् क्वचिच्छ्रैष्ठ्यमुपैति लोके ॥
राज्ञामृषीणां च हितानि तानि ।
कृतानि पुत्रैरकृतानि पुत्रैः ॥ ५१ ॥

एवं नृपः प्रत्ययितैर्द्विजैस्तैराश्वासितश्चाप्यभिनंदितश्च ॥
शंकामनिष्टां विजहौ मनस्तः प्रहर्षमस्मोन्द्रुमामारुरोह ॥ ५२ ॥

१ C पूर्व. २ C ०वानशक्तिः. ३ C वाल्मिकीनादश्च. ४ C पुत्रैरकृतानि पुत्रैः. ५ C मेधाश्रिकमा०.

नृपः शुद्धोदनः मत्यर्पितैः संजातानुभवैः तैः तत्रस्थैर्द्विजैः आश्वासितः अभिनंदितश्च सन् अनिष्टां शंकां किमेतत् कथमयं अयोनिजः उदरं भित्त्वा बहिर्यातः कथं वा कूपोत्पत्तिः कथं वा शीतोष्णोदकधारे एनं सेवेते किमिदं भूतं वा इत्याद्यनिष्टा आशंकां मनस्तः प्रजहौ ॥ ५१ । ५२ ॥

प्रीतश्च तेभ्यो द्विजसत्तमेभ्यः ।
सत्कारपूर्वं प्रददौ धनानि ॥
भूयादयं भूमिपतिर्यथोक्तो ।
यायाज्जरामेत्य वनानि चेति ॥ ५३ ॥

सत्कार आदर पूर्वो यस्मिन् कर्मणि यथास्यात्तथा । दानक्रियाविशेषणमेतत् । यथोक्तः उक्तप्रकारविशिष्ट । जरां वार्धक्यं । एत्य वनानि यायात् गच्छेत् । पूर्वे राजर्षयो हि पूर्वाऽवस्थायां सम्यक् राज्यं पालयित्वा उत्तरे वयसि ब्रह्मज्ञानार्थं अरण्यानि गत्वा तत्र तपआदिना देहसार्थक्यं चक्रुः । तद्वदयमपि करिष्यतीति तात्पर्यं ॥ ५३ ॥

अथो निमित्तैश्च तपोबलाच्च । तज्जन्म जन्मांतकरस्य बुध्वा ॥
शाक्येश्वरस्यालयमाजगाम । सद्धर्मतर्षादसितो महर्षिः ॥ ५४ ॥

निमित्तैः पूर्वोक्तानेकविधशुभचिन्हैः । तपोबलात् योगसामर्थ्यात् । जन्मान्तकरस्य जन्ममरणादिरूपसंसारस्य अंतं नाशं करोतीति तथाभूतस्य परमेश्वरस्येत्यर्थः । तज्जन्म तमवतारमित्यर्थं । असितः असितनामकः । सद्धर्मतर्षात् उत्तमपुण्यादिलोभात् । शाक्येश्वरस्य पूर्वोक्तस्य ॥ ५४ ॥

सं ब्रह्मविद् ब्रह्मविदां ज्वलंतं । ब्राह्मया श्रिया चैव तपःश्रिया च ॥
राज्ञो गुरुर्गौरवसत्कृतं तं । प्रवेशयामास नरेन्द्रसद्म ॥ ५५ ॥

ब्राह्मया श्रिया ब्रह्मवर्चसेन । तपःश्रिया तपःसामर्थ्येन । ब्रह्मविदां मध्ये । ज्वलंतं देदीप्यमानं । गौरवसत्कृतं तं असितं । राज्ञः शुद्धोदनस्य । स गुरुः उपाध्यायः । नरेंद्रसद्म राजगृहं । प्रवेशयामास । विदुषां आनयनं गुरुणा कर्तव्यं इति रीतिः शाकुंतलादौ द्रष्टव्या ॥ ५५ ॥

स पार्थिवान्तःपुरमेव विद्वान् । कुमारजन्मागतहर्षवेगम् ॥
विवेश निःशंकतयैव धीरस्तपःप्रकर्षाच्च जराश्रयाच्च ॥ ५६ ॥

स असितः । कुमारजन्मागतहर्षवेगं कुमारस्य जन्मना आगतो हर्षवेगो यस्य एतादृशं पार्थिवान्तःपुरं निःशंकतया विवेश । निःशंकतया प्रवेशे हेतुभूतविशेषणे धीरः विद्वानिति । तपः प्रकर्षात् जराश्रयात् इदमपि हेतुद्वयं प्रवेशे ज्ञेयं ॥ ५६ ॥

१ A तज्जन्मनाशो स्मभ्भो स बुध्वा. २ C A तैः। ३ C सन्निधाप्यां. ४ C A स. ५ C पुरमभिकर्ष— ६ C ०वेश धीरो बलशीश्रयैव.

ततो नृपस्तं मुनिमासनस्थं । पाद्यार्घ्यपूर्वं प्रतिपूज्य सम्यक् ॥
निमंत्रयामास यथोपचारं । यथा वसिष्ठं स हि रन्तिदेवः ॥ ५७ ॥

पाद्यं च अर्घ्यं च ते पूर्वे यस्मिन् कर्मणि यथास्यात्तथा पाद्यार्घ्यपूर्वं उपचारान् अनतिक्रम्य इति यथोपचारं सम्यक् प्रतिपूज्य निमंत्रयामास बभाषे इत्यर्थः॥५७॥

धन्योऽस्म्यनुग्राह्यमिदं कुलं मे ।
यन्मां दिदृक्षुर्भगवानुपेतः ॥
आज्ञाप्यतां किं करवाणि सौम्य ।
शिष्योऽस्मि विश्रंभयितुं त्वमर्हः ॥ ५८ ॥

बभाषे इत्युक्तं तदेवाह । धन्योऽस्मीत्यादिना । स्पष्टोऽर्थः ॥ ५८ ॥

एवं नृपेणोपनिमंत्रितः सन् । सर्वेण भावेन मुनिर्यथावत् ॥
स विस्मयोत्फुल्लविशालदृष्टिर्गम्भीरधीराणि वचांस्युवाच ॥ ५९ ॥

उपनिमंत्रितः प्रार्थितः । यथावत् यथार्थं । उवाचेत्यर्थः ॥ ५९ ॥

महात्मनि त्वय्युपपन्नमेतत् । प्रियातिथौ त्यागिनि धर्मकामे ॥
सत्वान्वयज्ञानवयोऽनुरुपा । स्निग्धा यदेवं मयि ते मति स्यात्॥६०॥

किमुवाच तदाह—महात्मनीत्यादिना । सत्वं अंतःकरणं अन्वयः सद्वंशः ज्ञानं बुद्धिः वयश्च एतेषामनुरुपा योग्या । यत् यस्मात् कारणात् ॥ ६० ॥

एतच्च तद्येन नृपर्षयस्ते धर्मेण सूक्ष्मेण धनान्यपास्य ॥
नित्यं यजंतो विधिवद्बभूवुस्तपोभिराढ्या विभवैर्दरिद्राः ॥ ६१ ॥

ते नृपर्षयः सूक्ष्मेण धर्मेण धनान्यपास्य लब्ध्वा नित्यं विधिवत् यजन्तः तपोभिः आढ्याः युक्ताः च विभवैः ऐश्वर्यैः दरिद्राः बभूवुः इति यत् तदेतदित्यन्वयः ॥ ६१ ॥

प्रयोजनं यत्तु ममोपयाने । तन्मे शृणु प्रीतिमुपेहि च त्वं ॥
दिव्या मया दिव्यपथे श्रुता वाग् । बोधाय जातस्तनयस्तवेति॥६२॥

मे मत्तः । तव तनयः बोधाय जातः इति दिव्या वाक् दिव्यपथे मया श्रुतेति अन्वयः ॥ ६२ ॥

श्रुत्वा वचस्तच्च मनश्च युक्त्वा ।
ज्ञात्वा निमित्तैश्च ततोऽस्म्युपेतः ॥
दिदृक्षया शाक्यकुलध्वजस्य ।
शक्रध्वजस्येव समुच्छ्रितस्य ॥ ६३ ॥

तत् आकाशवाणीरूपं वचः श्रुत्वा च मनः युक्त्वा अन्तःकरणमेकाग्रं कृत्वेत्यर्थः । निमित्तैः शुभचिह्नैः ज्ञात्वा अयं भगवानवतीर्ण इति ज्ञात्वेत्यर्थः समुच्छ्रितस्य शक्रध्वजस्येव शाक्यकुलध्वजस्य दिदृक्षया उपेतोऽस्मीत्यन्वयः ॥ ६३ ॥

१ C पुरा वसिष्ठं स इवान्ति०. २ C विश्रंभितुमर्हसीति. ३ C सूक्ष्माणि.

इत्येतदेवं वचनं निशम्य । प्रहर्षसंभ्रांतमतिर्नरेन्द्रः ॥
धात्र्यंकसुप्तं कुमरं प्रशान्तं । संदर्शयामास तपोधनाय ॥ ६४ ॥

धात्र्याः उपमातायाः अंके उत्संगे सुप्तं । स्पष्टमन्यत् ॥ ६४ ॥

चक्राङ्कपादं स तथा महर्षिर्जालावनद्धांगुलिपाणिपादं ॥
सोर्णभ्रुवं वारणवस्तिकोशं । सविस्मयं राजसुतं ददर्श ॥ ६५ ॥

चक्रं अंकः ययोस्तौ चक्रांकौ तौ पादौ यस्य तं अनेन महापुरुषत्वं दर्शितं एवमग्रेऽपि ज्ञेयं । जालं नवकलिकावृंदं तद्वत् अवनद्धाः संलग्नाः अंगुलयो यस्मिन् एतादृशं पाणिपादं यस्य तं। ऊर्णा भ्रूमध्यस्थ आवर्तः । "ऊर्णा मेषादिलोम्नि स्यादावर्ते चांतराभ्रुवोः" इत्यमरः । तेन सहिते भ्रुवौ यस्य सः तं । वारणस्येव हस्तिन इव वस्तिः कोशः नाभेरधोभागो यस्य तं । सविस्मयं साश्चर्यं । दुर्लभमहापुरुषलक्षणवैशिष्ट्यादाश्चर्यं ॥ ६५ ॥

धात्र्यंकसंविष्टमवेक्ष्य चैनं ।
देव्यंकसंविष्टमिवाग्निसूनुं ॥
बभूव पक्ष्मांतरितांचिताश्रु-
र्निश्वस्य चैर्वं त्रिदिवोन्मुखोऽभूत् ॥ ६६ ॥

देव्यंकसंविष्टं पार्वत्युत्संगोपविष्टं।अग्निसूनुं कार्तिकेयं । पक्ष्मभिः अक्षिलोमभिः अन्तरितानि व्यवहितानि अंचितानि पूजितानि मनोहराणीत्यर्थः अश्रूणि यस्य । त्रिदिवे आकाशे उद्गतं मुखं यस्य आकाशावलोकनकारी ॥ ६६ ॥

दृष्ट्वासितं त्वश्रुपरिप्लुताक्षं । स्नेहाद्धि पुत्रस्य नृपश्चकम्पे ॥
सगद्गदं वाष्पनिरुद्धकंठः । पप्रच्छ तं प्रांजलिरानतांगः ॥ ६७ ॥

अश्रुपरिप्लुताक्षं असितं दृष्ट्वा वाष्पनिरुद्धकंठ वाष्पेण निरुद्धः कंठो यस्य ॥ ६७ ॥

स्वल्पान्तरं यस्य वपुर्मुने स्याद्बह्वद्भुतं यस्य च जन्मदीप्तं ॥
यस्योत्तमं भाविनमात्थ चार्थं । तं प्रेक्ष्य कुतस्तव धीर वाष्पः ॥ ६८ ॥

हे धीर मुने यस्य स्वल्पावकाशं लघु इति यावत् एवमपि यस्य जन्म बह्वद्भुतं दीप्तं च यस्य भाविनं भविष्यत्कालिकं अर्थं प्रयोजनं उत्तमं आत्थ तं प्रेक्ष्य तव वाष्पः कुत इत्यन्वयः ॥ ६८ ॥

अपि स्थिरायुर्भगवन्कुमारः । कच्चिन्न शोकाय मम प्रसूतः ॥
लब्धः कथंचित्सलिलांजलिर्मे । न खल्विमं पातुमुपैति कालः ॥ ६९ ॥

स्वात्मजदर्शनेन अश्रुमुखं मुनिं वीक्ष्य भीतो नृपः पुत्रस्य अत्याहितमाशंक्य अनेकविकल्पान् करोति अपिस्विदित्यादिना । हे भगवन् कुमार स्थिरायु चिरायुः अपिस्वित् । मम शोकाय प्रसूतः न कच्चित् । मे मया कथंचित् सलिलांजलिः

१ C गति for मति २ C आदाय धात्र्यकगत कुमारं. ३ C र्श for रा ४ C वै for श. ५ C ॰श्चातुर॰ ६ C वाष्पपर्याकुलाक्षः. ७ C च for त ८ C कामं, सर. ९ C पातुं. would not हर्तुं be better?

लब्धः । परलोके पुत्रः सलिलांजलिं दास्यति इत्यभिप्रायेण सलिलांजलिर्लब्ध इत्युक्तं । इमं पूर्वोक्तं सलिलांजलिं कालः मृत्युः पातुं खलु नोपैति इत्यन्वयः । विपत्तौ सलिलांजलेरभावात् तस्मिन् मृत्युपीतत्वोपचारः ॥ ६९ ॥

**अस्त्यक्षयं मे यशसो निधानं । कच्चिद्ध्रुवो मेऽन्वयसंप्रसारः ॥**
**अपि प्रयास्यामि सुखं परत्र । सुतेऽपि पुत्रेऽनिमिषैकचक्षुः ॥७०॥**

यशसः निधानं निधिः अपि अक्षयं । पुत्रसत्त्वे यशसोऽक्षयत्वमित्यर्थः । मेऽन्वयसंप्रसारः वंशविस्तारः ध्रुवः कच्चित् । अनिमिषं निमेषरहितं एकं चक्षुर्यस्य देवानां निमिषो नास्तीत्यभिप्रायेण । अथवा पुत्रस्य 'पुत्रेण लोकं जयतीति श्रुत्या स्वर्गप्रदर्शकत्वात् चक्षुरूपत्वं । तस्मिन् पुत्रे जाग्रति स्वर्गदर्शनं निर्विवादमेव तस्मिन् सुप्तेपि तस्य विद्यमानत्वात् स्वर्गलोकदर्शनं भवति पुत्रसत्त्वं स्वर्गप्रदर्शिका न तु तस्य जाग्रदवस्थे स्वर्गप्रदर्शिकेति नियमः । प्रसिद्धं नेत्रं तु उद्घाटितमेव वस्तुप्रदर्शकं न तु पिहितमपि वस्तुगत्या विद्यमानं पदार्थदर्शकं भवति इति लौकिकचक्षुरपेक्षया पुत्ररूपचक्षुषः विलक्षणत्वं प्रदर्शितमिति दिक् । मम पुत्रः चिरकालमपि जीवेत् इति प्रश्नाभिप्रायः ॥ ७० ॥

**कच्चिन्ममेजातमफुल्लमेव ।**
**कुलप्रवालं परिशोषभागि ॥**
**क्षिप्रं विभो ब्रूहि न मेऽस्ति शांतिः ।**
**स्नेहं सुते वेत्सि हि बान्धवानां॥ ७१ ॥**

हे विभो मे जातं कुलप्रवालं कुलांकुरः अफुल्लमेव अविकसितमेव परिशोषभागि परिशोषं शुष्कतां भजतीति परिशोषभागि शुष्कमित्यर्थः । न कच्चित् । तत् क्षिप्रं ब्रूहि । स्पष्टमन्यत् ॥ ७१ ॥

**इत्यागतावेगमनिष्टबुद्ध्या । बुध्वा नरेन्द्रं स मुनिर्बभाषे ॥**
**मा भून्मतिस्ते नृप काचिदन्या । निःसंशयं तद्यदवोचमस्मि ॥७२॥**

इति अनिष्टबुध्या आगतावेगं आगतसाध्वसं । नरेंद्रं बुध्वा सः मुनिः बभाषे हे नृप ते अन्या विपरिता काचित् मतिः बुद्धिः माभूत् । यत् अहं अवोचं तत् निःसंशयमस्तीत्यन्वयः ॥ ७२ ॥

**नास्यान्यथात्वं प्रति विक्रिया मे ।**
**स्वां वंचनां तु प्रति विक्लवोऽस्मि ॥**
**कालो हि मे यातुमयं च जातो ।**
**जन्मक्षयस्यासुलभस्य बोद्धा ॥ ७३ ॥**

यदि बालकस्य किंचिदप्याहितं नास्ति तर्हि बालावलोकनेन तव साश्रुत्वादि विक्रिया किंनिमित्ता इत्यपेक्षायामाह—नास्येति । अन्यथात्वं वैपरित्यं प्रति । स्वां वंचनां व्यर्थायुष्यं प्रति विक्लवः विह्वलः अस्मि । तामेव वंचनां दर्शयति ।

१ C अय. २ C कुलहरसप्रसारः. ३ A स्वर्वंचनामप्रतिदैन्यमस्मि । कालोहृगामातु- मितीह बालो. ४ C जाति.

हि मे मम यातुं गंतुं कालः गमनस्य कालः इत्यर्थः । "काल समयवेलासु" इति तुमुन् । अमुलभस्य दुर्लभस्य जन्मक्षयस्य मोक्षस्येत्यर्थः बोद्धा अयं जातः॥७३॥

विहाय राज्यं विषयेष्वनास्थ । स्तीव्रैर्हि यत्नैरधिगम्य तत्वं ॥
जगत्ययं मोहतमो निहंतुंज्वलिष्यति ज्ञानमयो हि भानुः॥७४॥

बालस्य भाविनमर्थं वर्णयति विषयेषु अनास्थः अयं राज्यं विहाय तीव्रैः प्रयत्नैः तत्वमधिगम्य जगति मोहतमो निहन्तुं ज्ञानमयः सूर्यः ज्वलिष्यति हि ॥७४॥

दुःखार्णवाद्व्याधिविकीर्णफेनाज्जरातरंगान्मरणोग्रवेगात् ॥
उत्तारयिष्यत्ययमुह्यमानं । मार्तं जगद्ज्ञानमहाप्लवेन ॥ ७५ ॥

दुःखार्णवात् दुःखसमुद्रात् व्याधयः एव विकीर्णो विक्षिप्ताः फेनो यस्मिन् । उह्यमानं निमज्जत् । ज्ञानमेव महाप्लवः महती नौका तयेत्यर्थः ॥ ७५ ॥

प्रज्ञांबुवेगां स्थिरशीलवप्रां । समाधिशीतां व्रतचक्रवाकाम् ॥
अस्योत्तमां धर्मनदीं प्रवृत्तां । तृष्णार्दितः पास्यति जीवलोकः॥७६॥

प्रज्ञैव अंबु उदकं तस्य वेगो यस्यां । स्थिरं शीलं स्वभाव एव वप्रो तटं यस्याः । समाधिना शीतां शीतला । व्रतानि नियमा एव चक्रवाका यस्यां । अस्य एतत् संबंधिनीं जन्मजनकभावः संबंधः एतस्मादुत्पन्नामित्यर्थः । धर्मः पुण्यं ज्ञानं वा सैव नदी ताम् इत्यादि अन्वयः ॥ ७६ ॥

दुःखार्दितेभ्यो विषयावृतेभ्यः ।
संसारकांतारपथस्थितेभ्यः ॥
आख्यास्यति ह्येष विमोक्षमार्गं ।
मार्गप्रनष्टेभ्य इवाध्वगेभ्यः ॥ ७७ ॥

संसार एव कांतारपथः दुर्गममार्गः तत्र स्थितेभ्यः मार्गः प्रनष्टो येषां । आहिताग्न्यादित्वात् परनिपातः । अध्वगेभ्यः पथिभ्यः ॥ ७७ ॥

विदह्यमानाय जनाय लोके । रागाग्निनायं विषयेंधनेन ॥
प्रल्हादमाधास्यति धर्मवृष्ट्या । वृष्ट्या महामेघ इवातपांते ॥७८॥

लोके विषया एव इंधनानि यस्य तेन रागाग्निना विदह्यमानाय जनाय आतपांते ग्रीष्मान्ते वृष्ट्या महामेघ इव अयं धर्मवृष्ट्या प्रल्हादं आधास्यतीत्यन्वयः ॥७८॥

तृष्णार्गलं मोहतमःकपाटं । द्वारं प्रजानामपयानहेतु ॥
विपाटयिष्यत्ययमुत्तमेन । सद्धर्मताडेन दुरासदेन ॥ ७९ ॥

तृष्णैव अर्गला प्रतिबंधकत्वाद्विशेषो यस्य । मोहतमः एव कपाटं आच्छादनकारकं यस्य । अपयानहेतु अपकृष्टं यानं गमनं येन सः अपयानः कुमार्गः तस्य हेतु कारणं मार्गस्य कुत्सितत्वे हि कुत्सितं गमनं भवति । कुमार्गगमनसाधनं । विपाटयिष्यति उद्घाटयिष्यति । दुरासदेन दुष्प्रापेण । सद्धर्म एव ताडः ताडन मिव ॥ ७९ ॥

---

[illegible]

प्रमोहपाशैः परिवेष्टितस्य । दुःखाभिभूतस्य निराश्रयस्य ॥
लोकस्य संबोध्य च धर्मराजः । करिष्यते बन्धनमोक्षमेषः ॥८०॥

संबोध्य ज्ञानं प्रापय्य एषः धर्मराजः लोकस्य बंधनमोक्षं करिष्यते ॥ ८० ॥

तन्मा कृथाः शोकमिमं प्रति त्वं ।
स सौम्य शोच्यो हि मनुष्यलोके ॥
मोहेन वा कामसुखैर्मदाद्वा ।
यो नैष्ठिकं श्रोष्यति नास्य धर्मं ॥ ८१ ॥

तत् पूर्वोक्तप्रभावाद्धेतोः इमं प्रति शोकं मा कृथाः । तर्हि किं विषये शोकः कार्यः तं शोकविषयं दर्शयति । हे सौम्य मनुष्यलोके स शोच्यः यः मोहेन कामसुखैः मदाद्वा अस्य नैष्ठिकं धर्मं न श्रोष्यति स शोच्य इति पूर्वेण अन्वयः ॥ ८१ ॥

भ्रष्टस्य तस्माच्च गुणादतो मे ।
ध्यानानि लब्ध्वाप्यकृतार्थतैव ॥
धर्मस्य तस्याश्रवणादहं हि ।
मन्ये विपत्तिं त्रिदिवेऽपि वासम् ॥ ८२ ॥

अतः हेतोः तस्माद्गुणात् धर्मश्रवणरूपगुणात् भ्रष्टस्य मे ध्यानानि लब्ध्वापि अकृतार्थतैव । किंबहुना तस्य धर्मस्य अश्रवणात् त्रिदिवेऽपि वासं विपत्तिमहं मन्ये ॥ ८२ ॥

इति श्रुतार्थः ससुहृत्सदार- ।
स्त्यक्त्वा विषादं मुमुदे नरेंद्रः ॥
एवंविधोऽयं तनयो ममेति ।
मेने स हि स्वामपि सारवत्ताम् ॥ ८३ ॥

ससुहृत् समित्रः सदारः सस्त्रीकः । स्वां स्वीयां सारवत्तां श्रेष्ठयं मेने । एवंविधा प्रकारः यस्य सः विपूर्वकात् धाधातोः आतश्चोपसर्गे इति अङ् प्रत्ययः॥८३

आर्येण मार्गेण तु यास्यतीति । सत्यं नरेन्द्रो हृदये चकार ॥
न खल्वसावप्रियधर्मपक्षः । संताननाशात्तु भयं ददर्श ॥ ८४ ॥

आर्येण मार्गेण मोक्षमार्गेण यास्यतीति हृदये यावत् यदि आर्यमार्गगमनेन अस्य दुःखं जातं तर्हि अयं किं धर्मपथविरुद्ध इत्याशंक्याह—न खल्विति । असौ शुद्धोदनः प्रियधर्मपक्षः नेति न खलु किंतु प्रियधर्मपक्ष एव । ननुद्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वं तर्हि कुतो दुःखं इत्यत आह—संतानेति ॥ ८४ ॥

१ C स्नेहो॰. २ C संवुध्य. ३ C शोच्ये. ४ C नरेंद्रः. ५ C विन्यादिधेर्हृदयं च॰. ६ C न खल्वसौ न प्रि॰ A न खल्वसौ न प्रि॰.

अथ मुनिरसितो निवेद्य तत्त्वं । सुतनियतं सुतविक्लवाय राज्ञे ॥
स बहुमतमुदीक्ष्यमाणरूपः । पवनपथेन यथागतं जगाम ॥ ८५ ॥

अथ असितः मुनिः सुतविक्लवाय राज्ञे सुतविषये विव्हलाय शुद्धोदनाय सुतनियतं सुतसंबंधि अवश्यंभावि तत्त्वं याथार्थ्यं निवेद्य सबहुमतं बहुमानपुरःसरं यथा तथा उदीक्ष्यमाणरूपः अविलोकितस्वरूपः सन् पवनपथेन आकाशमार्गेण यथागतं जगाम ॥ ८५ ॥

कृतमतिरनुजासुतं च दृष्ट्वा । मुनिवचनश्रवणेऽपि तन्मतौ च ॥
बहुविधमनुकंपया स साधुः । प्रियसुतवद्विनियोजयांचकार ॥ ८६ ॥

मायादेव्याः जेष्ठभ्राता तदानीं तत्रासीत् । स. अनुजायाः मायादेव्याः सुतं दृष्ट्वा मुनिवचनश्रवणे तन्मतौ तज्ज्ञाने कृता मतिः बुद्धिर्येन एतादृशः साधुः बहुविधं यथास्यात्तथा अनुकंपया दयया प्रियसुतवत् विनियोजयांचकार नियोजयामासेत्यर्थः ॥ ८६ ॥

नरपतिरपि पुत्रजन्मतुष्टो । विषयगतानि विमुच्य बंधनानि ॥
कुलसदृशमचीकरद्यथावत् । प्रियतनयस्तनयस्य जातकर्म ॥ ८७ ॥

विषयगतानि विषयासक्तिप्राप्तानि बंधनानि विमुच्य यथावत् यथाविधि कुलसदृशं कुलपरंपराऽनुरूपं ॥ ८७ ॥

दशसु परिगतेष्वहःसु चैवं । प्रयतमनाः परया मुदा परीतः ॥
अकुरुत जपहोममंगलाद्याः परमतमाः स सुतस्य देवतेज्याः ॥ ८८ ॥

प्रयतमनाः नियमितांतःकरणः परमतमाः सुतस्य सुतसंबंधिनीः देवतेज्याः देवतापूजनानि ॥ ८८ ॥

अपि च शतसहस्रपूर्णसंख्याः ।
स्थिरबलवत्तनयाः सहेमशृंगीः ॥
अनुपगतजराः पयस्विनीर्गाः ।
स्वयमददात्सुतवृद्धये द्विजेभ्यः ॥ ८९ ॥

तत्र दानं एकस्याः द्वयोर्वा गवोर्नासीत् किंतु शतं परिच्छिद्य सहस्रं परिच्छिद्य एवं समुदायदानं आसीत् इत्यर्थः । शतसहस्रसंख्यया पूर्णा संख्या यासां । शतशः सहस्रशो [illegible] । स्थिरबलवत्तनयाः बलवद्वत्साः अनुपगतजराः अप्राप्तजराः तद्[illegible] ॥ ८९ ॥

बहुविधविषयास्ततो यतात्मा । स्वहृदयतोषकरीः क्रियाः विधाय ॥
गुणवति दिवसे शिवे मुहूर्ते । मतिमकरोन्मुदितः पुरप्रवेशे ॥ ९० ॥

बहुविधा विषया [illegible] यासां । स्वहृदयतोषकरीः अंतःकरणतोषकरीः । [illegible] गतस्तोषो यस्य [illegible] अनुभवितसंमतत् । गुणवति दिवसे पं[illegible] दिने शिवे मुहूर्ते [illegible] ॥ ९० ॥

---

[illegible]

द्विरदरदमयीमथ महार्हां ।
सितसितपुष्पभृतां मणिप्रदीपां ॥
अभजत शिविकां शिवाय देवी ।
तनयवती प्रणिपत्य देवताभ्यः ॥ ९१ ॥

द्विरदरदमयी हस्तिदंतमयीं । महार्हां महामूल्यां । अतिशुभ्रपुष्पालंकृतां । हीरका एव प्रदीपा यस्यां । देवी माया ॥ ९१ ॥

पुरमथ पुरतः प्रवेश्य पत्नीं ।
स्थविरजनानुगतामपत्यनाथां ॥
नृपतिरपि जगाम पौरसंघै- ।
र्दिवममरैर्मघवानिवार्च्यमानः ॥ ९२ ॥

स्थविरजनैः वृद्धजनैः अनुगतां अनुयातां । अपत्यं नाथ. यस्याः अपत्ययुक्तामित्यर्थः । अमरैः अर्च्यमानः मघवान् दिवमिव पौरसंघैः अर्च्यमानो नृपतिरपि पुरं जगाम ॥ ९२ ॥

भवनमथ विगाह्य शाक्यराजो ।
भव इव षण्मुखजन्मना प्रतीतः ॥
इदमिदमिति हर्षपूर्णवक्त्रो ।
बहुविधपुष्टियशस्करं व्यधत्त ॥ ९३ ॥

शाक्यराजः शुद्धोदनः षण्मुखजन्मना षडाननोत्पत्त्या प्रतीतः तुष्टः ख्यातो वा इदं इदमिति तत्कर्मनिर्देशः । हर्षेण आनंदेन पूर्णं व्याप्तं वक्त्रं मुखं यस्य । बहुविधं एतादृशं यत्पुष्टिकीर्तिकरं व्यधत्त कृतवान् । पुष्टिश्च यशश्च पुष्टियशसी ते करोतीति पुष्टियशस्करं बहुविधं च तत् पुष्टियशस्करं चेति विग्रहः ॥ ९३ ॥

इति नरपतिपुत्रजन्मवृद्ध्या ।
सजनपदं कपिलाह्वयं पुरं तत् ॥
धनदपुरमिवाप्सरोऽवकीर्णं ।
मुदितमभून्नलकूवरप्रसूतौ ॥ ९४ ॥

सजनपदः सदेशः । कपिलाह्वयं कपिलसंज्ञं तत् पुरं नरपतिपुत्रजन्मना नरपतेः राज्ञः पुत्रः तस्य यज्जन्म जननं तेन या वृद्धिः तया । नलकूवरप्रसूतौ नलकूवरोत्पत्तौ अप्सरोवकीर्णं धनदपुरमिव कुबेरनगरमिव मुदितमभूत् ॥ ९४ ॥

## इति श्रीबुद्धचरिते महाकाव्ये सर्वार्थसिद्धप्रसूतिर्नाम प्रथमः सर्गः

इति श्री ५ पदवाक्यप्रमाणपारावारीणमहामहोपाध्यायश्रीगोपालचार्यांतेवासिना निगुडकरोपनामकनारायण( दत्तात्रेय )शर्मणा विरचितायां तत्त्वदीपिकाख्यायां बुद्धचरितसंक्षिप्तव्याख्यायां प्रथमः सर्गः ॥

---

1 C श्री for ५.

# द्वितीयः सर्गः ।

आजन्मनो जन्मजरांतकस्य ।
तस्यात्मजस्यात्मजितः स राजा ॥
अहन्यहन्यर्थगजाश्वमित्रै-।
र्वृद्धिं ययौ सिंधुरिवांबुवेगैः ॥ १ ॥

स राजा शुद्धोदनः । जन्म उत्पत्तिः जरा वार्ध्यक्यं विकारोपलक्षणमिदं तयोरंतकः नाशकः तस्य । आत्मानं स्वं शुद्धोदनं जयति गुणोत्कर्षेण इत्यात्मजित् । आत्मशब्दे उपपदे जिधातोः क्विप् प्रत्यय तुगागमश्च । अथवा आत्मज्ञानी आत्मनः परमेश्वरस्य ज्ञानं तदस्यास्तीति आत्मज्ञानी । इनिप्रत्ययः । परमात्मावेत्ता । तस्य आत्मजस्य । आजन्मनः जन्मादारभ्य अंबुवेगैः सिंधुरिव अहन्यहनि प्रतिदिनं । गजाश्वमित्रैः वृद्धिं ययौ ॥ १ ॥

धनस्य रत्नस्य च तस्य तस्य । कृताकृतस्यैव च कांचनस्य ॥
जिगाय चैकात्मनिधिर्नवापि । मनोरथस्याप्यतिभारभूतान् ॥२॥

धनस्य रत्नस्य तस्य तस्य कृताकृतस्य हेमरूप्यस्य 'हेमरूप्ये कृताकृते' इत्यमरः । कांचनस्य केवलसुवर्णस्य यः एकसंख्याकः आत्मनः निधिः शेवधिः स मनोरथस्यापि अतिभारभूतान् अतिशयश्चासौ भारश्च अतिभारः तं भूतान् प्राप्तान् । भूधातो प्राप्त्यर्थात् कर्तरि क्तप्रत्यय । अविषयानित्यर्थः । नवापि निधीन् जिगाय । एतेन राज्ञो निधेः अतिमहत्त्वं वर्णितम् ॥ २ ॥

यैः पद्मयुक्तैश्च परद्विपेंद्रैर्न मंडलं शक्यमदोऽभियातुं ॥
मदोत्कटा हैमवता गजास्ते । विनापि यत्नादुपतस्थुरेनं ॥ ३ ॥

पद्मेन दंतबंधेन युक्तैः 'पद्मोऽस्त्री बिंदुजालेऽब्जे व्यूह संख्यांतरे निधौ । गजानां दंतबंधेऽपि' इति त्रिकाण्डशेष । दंतबंधनेनापि अनेतुमशक्यैः इति बोधनार्थमिदं विशेषणं । द्विपेंद्रैः अद मंडलं देशं अभियातुं प्राप्तुं न शक्यं । मदेन दानेन उत्कटाः हिमवति भवाः हैमवता । ते पूर्वोक्ता गजाः यत्नं विनापि एनं शुद्धोदनमुपतस्थु । अस्य आत्मजस्य आजन्मनः गजाश्वमित्रैः राजा वृद्धिं ययौ । इतियदुक्तं तत् अनेन श्लोकेन स्फुटीकृतम् एवमग्रेपि ज्ञेयं ॥ ३ ॥

नानांकचिह्नैर्नवहेमभांडैर्भूषितैर्लंबसटैस्तथान्यैः ।
संचुक्षुभे चास्य पुरं तुरंगैर्बलेन मैत्र्या च धनेन चाप्तैः ॥ ४ ॥

---

१ A अजन्म॰. २ C आत्मजिनः. ३ C तदादि नैका॰. J तदादि वक्तार्थनिधीन॰. ४ C निर्धानवापि. ५ C ये पद्मकल्पैरपि च ६ C शक्यमिहाभिनेतुं.

अस्य पुरं नाना अंकचिह्नानि शुभाशुभरेखाचिह्नानि येषां तैः। नवानि हेम्नः सुवर्णस्य भांडानि अश्वभूषा येषां तैः। 'भांडं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः' इति मेदिनी। तथा अभूषितैः भूषणरहितैः लंबाः सटाः ग्रीवास्थकेशा येषां तैः अन्यैः भूषितान्यैरित्यर्थः तुरंगैः अश्वैः बलेन मैत्र्या धनेन च संचुक्षुभे इत्यादन्वयः॥ ४॥

पुष्टाश्च तुष्टाश्च तदास्य राज्ये।
साध्व्योऽरजस्का गुणवत्पयस्काः[1]॥
उदग्रवत्सैः सहिता बभूवु-।
र्बह्व्यो बहुक्षीरदुहश्च गावः॥ ५॥

साध्व्यः शोभनाः। नास्ति रजो यासां ताः शेषाद्विभाषेत्यनेन कप्प्रत्ययः। अरजस्काः रजोगुणरहिताः। रजःकार्यविक्षेपकोपादिरहिताः। गुणवत् गुणाढ्यं पयो दुग्धं यासां। अत्रापि कप् उदग्रवत्सैः सहिताः॥ ५॥

मध्यस्थतां तस्य रिपुर्जगाम।
मध्यस्वभावः प्रययौ सुहृत्त्वं॥
विशेषतो दार्ढ्यमियाय मित्रं।
द्वावस्य पक्षावपरस्तु नासीत्॥ ६॥

तस्य रिपुः मध्यस्थतां औदासीन्यं जगाम मध्यस्वभावः मध्यस्थः सुहृत्त्वं मित्रत्वं जगाम। एवं अस्य द्वौ मध्यस्थमित्ररूपौ पक्षौ आस्तां अपरः शत्रुपक्षस्तु नासीदित्यर्थः॥ ६॥

तथास्य मंदानिलमेघशब्दः। सौदामिनीकुंडलमंडितांगः॥
विनाशय[2] वर्षाशनिपातदोषं। काले च देशे प्रववर्ष देवः॥ ७॥

तथा पूर्वोक्तसलक्षणवत् अस्य मंबंधसामान्ये षष्ठीयं। मंदो अनिलमेघशब्दो यस्मात्। अथवा मन्दानिलः मेघश्च एतद्द्वयं शब्दो यस्य। सौदामिनी विद्युत् सैव कुंडले ताभ्यां मंडितं अंगं यस्य। देवः वृष्टिकारकः इंद्रः। वर्षासु प्रावृट्काले यः अशनिपातः स एव दोषः तं अथवा वर्षणे यः अशनिपातः स एव दोषः तं विनाश्य काले वर्षादिकाले देशे धान्यावापयोग्यादिदेशे च प्रववर्ष॥ ७॥

[3]रुरोह सम्यक् फलवद्यथर्तु। तदाकृतेनापि कृषिश्रमेण॥
ता एव चैवौषधयो रसेन। सारेण चैवाभ्यधिका बभूवुः॥ ८॥

अकृतेनापि कृषिश्रमेण अभितः सर्वतः अधिकाः आधिक्यवत्यः उत्कर्षवत्यः इत्यर्थः। अन्यत् स्पष्टार्थम्॥ ८॥

---

१ C ०सुनाशन. २ C सौदामिनी. ३ C ०नाइनव०. ४ C क्षेत्रैः.

शरीरसंदेहकरेऽपि काले । संग्रामसंमर्द इव प्रवृत्ते ॥
स्वस्थाः सुखं चैव निरामयं च । प्रजज्ञिरे गर्भधराश्च नार्यः॥ ९॥

शरीरसंदेहः जीवेद्वा न वेति संदेहः तं करोति संग्रामसंमर्दे इव काले प्रवृत्ते सति । एतादृशे रतिकाले प्रसूतिकाले च इति यावत् प्रजज्ञिरे प्रसूताः ॥ ९॥

तत्र प्रभुभ्यो विभवेऽपि लभ्ये ।
न प्रार्थयन्ते स्म नराः परेभ्यः ॥
अभ्यर्थितोः सूक्ष्मधनोस्तु नूनं ।
कदा न केचिद्विमुखा बभूव ॥ १० ॥

यत्र राज्ये । प्रभुभ्यः धनिकेभ्यः । नराः न प्रार्थयंते स्म । अभ्यर्थितः याचितः । सूक्ष्मधनोऽपि अल्पधनोपि । अयं दातृरूपः प्रभुः । विमुखः दानपराङ्मुखः ॥ १० ॥

द्वेष्योऽनृजुर्बंधुषु नाप्यदाता । नैवाव्रतो नैनृतको न हिंस्रः ॥
आसीत्तदा कश्चन तस्य राज्ये । राज्ञो ययातेरिव नाहुषस्य॥ ११॥

बंधुषु बांधवेषु द्वेष्यः अनृजुः कुटिलश्च । अव्रतः व्रतबंधादिक्रियारहितः नियमरहितो वा। नास्ति अनृतं मिथ्याभाषणं यस्य स अनृतकः। निषेधार्थकेन नशब्देन बहुव्रीहिसमासे शेषिकः कप्रत्ययः । नानृतिक अत्र निषेधार्थकः न शब्दः पृथक् । अनृतिकः मिथ्यावादी । हिंस्रः घातुकः । नासीदिति प्रत्येकं संबध्यते । अन्यत् स्पष्टम् ॥ ११ ॥

उद्यानदेवायतनाश्रमाणां ।
कूपप्रपापुष्करिणीवनानाम् ॥
चक्रुः क्रियास्तत्र च धर्मकामाः ।
प्रत्यक्षतः स्वर्गमिवाभिलक्ष्य ॥ १२ ॥

उद्यानदेवायतनं आक्रीडदेवालयं । प्रपा पानीयशालिका पुष्करिणी सरोवरं । धर्मकामाः पुण्यकामा- अभिलक्ष्य उद्दिश्य ॥ १२ ॥

मुक्तश्च दुर्भिक्षभयामयेभ्यो हृष्टो जनः स्वर्ग इवाभिरेमे ॥
पत्नीं पतिर्वा महिषी पतिं वा । परस्परं न व्यभिचेरतुश्च ॥१३॥

दुर्भिक्षं प्रसिद्धं भयं चोरादिभयं आमयो रोगः तेभ्यो मुक्तः इत्यन्वयः । न व्यभिचेरतुः मानसं शारीरं च व्यभिचारं तत्यजुः इत्यर्थः ॥ १३ ॥

---

१ C यत्र प्रभिभ्यो वि०. २ C वाक्ये १ C ०यन्ति स्म. ४ C ०र्थित. ५ C धनोऽपि चार्थं तदा न कश्चिद्विमुखो. ६ C नाशो वधो बंधु०. ७ C नानृतिको. ८ C मित्रो० प०भ्य. ९ C स्वर्गमिवा.

कश्चिन्निषेवे रतये न कामं।
कामार्थमर्थं न जुगोप कश्चित्॥
कश्चिद्धनार्थं न चचार धर्मं।
धर्माय कश्चिन्न चकार हिंसाम्॥ १४॥

कश्चित् रतये कामं न सिषेवे। कश्चित् कामार्थं अर्थं न जुगोप। कश्चित् धनार्थं धर्मं न चचार। कश्चित् धर्माय हिंसां न चकार इत्यन्वयः॥ १४॥

स्तेयादिभिर्नाप्यभितश्च त्रस्तं। स्वस्थं स्वचक्रं परचक्रमुक्तम्॥
क्षेमं सुभिक्षं च बभूव तस्य। पुरेष्वरण्येषु तथैव राष्ट्रे॥ १५॥

अभितः स्तेयादिभिः चौर्यादिभिः न त्रस्तं न पीडितं स्वचक्रं स्वराष्ट्रं। परचक्रमुक्तं शत्रुवर्जितं। स्पष्टमन्यत्॥ १५॥

तदा हि तज्जन्मनि तस्य राज्ञो। मनोरिवादित्यसुतस्य राज्ये॥
चचार हर्षः प्रणनाश पाप्मा। जज्वाल धर्मः कलुषं शशाम॥१६॥

आदित्यसुतस्य मनोरिव तस्य राज्ञः राज्ये। तदा पुत्रजन्मकाले। तज्जन्मनि पुत्रजन्मनि निमित्तसप्तमीयं पुत्रजन्मनिमित्तमित्यर्थः॥ १६॥

एवंविधा राजसुतस्य तस्य। सर्वार्थसिद्धिश्च यतो बभूव॥
ततो नृपस्तस्य सुतस्य नाम। सर्वार्थसिद्धोऽयमिति प्रचक्रे॥१७॥

एवंविधा प्रकारो यस्याः। 'विधाविधौ प्रकारे च' इत्यमरः। सर्वेषामर्थानां सिद्धिः सर्वार्थसिद्धिः। स्पष्टमन्यत्॥ १७॥

देवी तु माया विबुधर्षिकल्पं। दृष्ट्वा विशालं तनयप्रभावम्॥
जातं प्रहर्षं न शशाक सोढुं। ततो निवेष्टा त्रिदिवं जगाम॥१८॥

विबुधर्षिकल्पं देवर्षितुल्यं इत्यर्थः एतादृशं विशालं महान्तं तनयप्रभावं पुत्रसामर्थ्यम्॥ १८॥

ततः कुमारं सुरगर्भकल्पं। स्नेहेन पूर्णेन च पुत्रवत्तं॥
मातृष्वसा मातृसमप्रभावा। संवर्धयामास मुदा तदानीम्॥१९॥

सुरगर्भकल्पं देवगर्भतुल्यं। मातृसमप्रभावा मातृतुल्यसामर्थ्या॥ १९॥

ततः स बालार्क इवोदयस्थः। समीरितो वह्निरिवानिलेन॥
क्रमेण सम्यग्ववृधे कुमारस्ताराधिपः पक्ष इवातमस्के॥ २०॥

उदयस्थः उदयाचलस्थः अनिलेन समीरितः संवर्द्धितः वह्निरिव। ताराधिपः चंद्रः। अतमस्के नास्ति तमः अंधकारो यस्मिन् शुक्ले इत्यर्थः॥ २०॥

---

१ C ॰निषेवत्व. २ C न्टं. ३ C पुरपदानि दधे. ४ C कलुषः. ५ C तोऽभिमाराद दि. ६ C स्नेहेन च निीर्नि. ७ मानामकरप्रभुर.

ततो महार्हाणि च चंदनानि ।
रत्नावलिश्चौषधिभिः सगर्भा ॥
मृगप्रयुक्तो रथकांश्च हैमां ।
आचक्रिरेऽस्मै सुहृदालयेभ्यः ॥ २१ ॥

महार्हाणि महामूल्यानि चंदनानि विलेपनानि । ओषधिभिः बालरक्षाकार्योपाधिभिः सगर्भा युक्ता इत्यर्थः एतादृशी रत्नावली रत्नमाला । मृगप्रयुक्तान् मृगैः ऊढान् । हैमान् सौवर्णान् रथकान् अल्परथकान् । अस्मै सर्वार्थसिद्धये सुहृदा मित्रेण कर्त्रा आलयेभ्य निजगृहेभ्यः आचक्रिरे आनीताः दत्ता इत्यर्थः । कर्मणि लिट् ॥ २१ ॥

वयोऽनुरूपाणि च भूषणानि ।
हिरण्मया हस्तिमृगाश्वकाश्च ॥
रथाश्च गावो वसनप्रयुक्ता ।
गंत्री च चामीकररूप्यचित्रां ॥ २२ ॥

वयोनुरूपाणि अल्पवयोयोग्यानि । हिरण्मयाः हिरण्यप्रचुराः हस्तिमृगाश्वकाः स्वल्पा गजमृगघोटकाः । अत्र मृगस्य सेनाङ्गत्वाभावात् समाहारो न । वसनप्रयुक्ताः वस्त्ररचिताः । चामीकररूप्यचित्राः सुवर्णरूप्याभ्यां विचित्राः गन्त्रीः शाकटिका वर्गैर्वोढुं शक्यशकटानीत्यर्थः । अत्र सुहृदा आचक्रिरे इति पूर्वश्लोकात्संबध्यते ॥ २२ ॥

एवं स तैस्तैर्विषयोपचारैर्वयोऽनुरूपैरुपचर्यमाणः ॥
बालोऽप्यबालप्रतिमो बभूव । धृत्या च शौचेन धिया श्रिया च ॥२३॥

स बालः एवं पूर्वोक्तप्रकारेण । वयोऽनुरूपैः वयोयोग्यैः । विषयोपचारैः विषयोपस्करणैः । उपचर्यमाणः उपक्रियमाणः बालोऽपि धृत्या धैर्येण शौचेन शुचितया धिया बुद्ध्या श्रिया लक्ष्म्या अबालप्रतिमः ज्ञानृतुल्यः बभूव ॥ २३ ॥

वयश्च कौमारमतीत्य मध्यं ।
संप्राप्य बालः स हि राजसूनुः ॥
अल्पैरहोभिर्बहुवर्षगम्या ।
. जग्राह विद्याः स्वकुलानुरूपाः ॥ २४ ॥

बहुवर्षगम्याः बहुसवत्सरप्राप्या । स्वकुलानुरूपाः स्ववंशयोग्याः ॥ २४ ॥

---

१ CA ली. २ CA भो. ३ C तान् ४ C वां. ५ C मानाच०. ६ A सुहृदो गृहेभ्यः. ७ D मृगा शुकाश्च. ८ CA. गंत्रीश्च. ९ CA ०त्राः.

नैःश्रेयसं तस्य तु भव्यमर्थं ।
श्रुत्वा पुरस्तादसितान्महर्षेः ॥
शुद्धोदनः शाक्यकुलार्थमिच्छन् ।
कामेषु संगं जनयांबभूव ॥ २५ ॥

नैःश्रेयसं मोक्षानुरूपं भव्यं अर्थं प्रयोजनम् ॥ २५ ॥

कुलात्ततोऽस्मै स्थिरशीलसंयुता- ।
त्साध्वीं वपुर्ह्रीविनयोपपन्नां ॥
यशोधरां नाम यशोविशालां ।
तुल्याभिधानां श्रियमुद्वुवाह ॥ २६ ॥

कुलात् सत्कुलात् अस्मै सर्वार्थसिद्धः । स्थिरशीलसंयुतात् स्थिरस्वभावात् इत्यर्थः । वपुर्ह्रीविनयोपपन्नां वपुः सुंदरं शरीरं ह्रीः लज्जा विनयो नम्रता तैः उपपन्नां युक्तां । यशसा विशालां विस्तृतां कीर्तिमतीमित्यर्थः । तुल्यं अभिधानं नाम यस्याः । अन्वर्थनाम्नीं इत्यर्थः । यशोधरां नाम यशोधरा इति प्रसिद्धां श्रियं लक्ष्मीं उद्वुवाह ॥ २६ ॥

अथानंतरं भूमिपतेः प्रियोऽयं । सनत्कुमारप्रतिमः कुमारः ॥
सार्धं तया शाक्यनरेंद्रवध्वा । शच्या सहस्राक्ष इवाभिरेमे ॥ २७ ॥

सनत्कुमारप्रतिमः सनत्कुमारतुल्यः । शाक्यनरेंद्रस्य शुद्धोदनस्य वध्वा स्नुषया 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः । अर्थात् स्त्रिया ॥ २७ ॥

किंचिन्मनःक्षोभकरं प्रतीपं । कथं न पश्येदिति सोऽनुचिंत्य ॥
वासं नृपो व्यादिशति स्म तस्मै । हर्म्योदरेष्वेव न भूप्रचारं ॥ २८ ॥

मनःक्षोभकरं मनउद्वेगकरं । प्रतीपं विपरीतं विरागजनकमित्यर्थः । कथं न पश्येत् केन प्रकारेण एतस्य दृष्टिपथं न गच्छेत् इति स नृपः अनुचिंत्य विचार्य तस्मै सर्वार्थसिद्धाय हर्म्योदरेष्वेव हर्म्यमध्येष्वेव वासं आदिशति स्म । भूप्रचारं न आदिशति स्म ॥ २८ ॥

ततः शरत्तोयदपांडुरेषु । भूमौ विमानेषु च रंजितेषु ॥
हर्म्येषु सर्वर्तुसुखाश्रयेषु । स्त्रीणामुदारैः रमते स्म तूर्यैः ॥ २९ ॥

ततः हर्म्येषु शरत्तोयदपांडुरेषु शरत्कालिकाभ्रसितेषु भूमौ विमानेष्विव भूमिस्थविमानेष्विव रंजितेषु नानावर्णरंजितेष्वित्यर्थः । सर्वर्तुसुखाश्रयेषु सर्वर्तुसुखकारकाश्रयेषु स्त्रीणां उदारैः तूर्यैः वाद्यैः रमते स्म क्रीडां चकार ॥ २९ ॥

---

१ C कामेषु [illegible] A [illegible] २ C कुलात्ततोऽस्मै. ३ A वपुर्ह्री. ४ A [illegible] ॥ ५ C ०स्तनुषा. ६ C अथतं भूमि०. ७ C व. ८ C शोरे०. ९ C स्थिर. १० C हर्म्येषु. ११ C A [illegible].

**कलैर्हि चामीकरबद्धकक्ष्यैर्नारीकराग्राभिहतैर्मृदंगैः ॥**
**वराप्सरोनृत्यसमैश्च नृत्यैः । कैलासवत्तद्भवनं रराज ॥ ३० ॥**

कलैः मधुरैः चामीकरबद्धकक्ष्यैः सुवर्णखचितकक्ष्यैः । नारीकराग्राभिहतैः स्त्रीहस्ताग्रताडितैः एतादृशैः मृदंगैः मुरजैः । वराप्सरोनृत्यसमैः उत्तमाप्सरोनृत्यसमैः उत्तमाप्सरोनृत्यतुल्यैः नृत्यैः कैलासपर्वतवत् तत् भवनं रराज ॥ ३० ॥

**वाग्भिः कलाभिर्ललितैश्च भावैर्मदैः सखेलैर्मधुरैश्च हासैः ॥**
**भ्रुवोंचितैरर्धनिरीक्षितैश्च । तं तत्र नार्यो रमयां बभूवुः ॥ ३१ ॥**

भ्रुवोंचितैः अंचितैः पूजितैः । पूजनार्थादंचधातोः क्तप्रत्ययः । उन्नयनादिक्रियाभिरिति फलितोऽर्थः । भ्रूवंचितैरितिपाठे भ्रुकुटिप्रलंभनैः खेलया कंदुकादिक्रीडनेन सह इति सखेलैः हासविशेषणमिदं । अर्धनिरीक्षितैः कटाक्षावलोकनैः । अत्र चतुर्थतृतीयचरणयोर्व्यत्यासे माधुर्यविशेषः ॥ ३१ ॥

**ततश्च कामागमपंडिताभिः । स्त्रीभिर्गृहीतो रतिकर्कशाभिः ॥**
**विमानपृष्ठान्न महीं जगाम । विमानपृष्ठादिव विश्वकर्मा ॥ ३२ ॥**

कामागमः कामशास्त्रं तत्र पंडिताभिः विदुषीभिः । रतिकर्कशाभिः विमानपृष्ठात् सार्वभौमगृहपृष्ठात् । 'विमानं व्योमयाने स्यात् सार्वभौमगृहेऽपि च ।' इति मेदिनी । विमानपृष्ठात् व्योमयानपृष्ठात् ॥ ३२ ॥

**नृपस्तु तस्यैव विवृद्धिहेतोस्तद्भाविनार्थेन च चोद्यमानः ॥**
**शमेऽभिरेमे विरराम पापाद्भेजे दमं संविबभाज साधून् ॥ ३३ ॥**

तस्यैव सर्वार्थसिद्धस्यैव । विवृद्धिहेतोः उत्कर्षहेतोः । तद्भाविना तत्करिष्यमाणेन अर्थेन कार्येण चोद्यमानः प्रेर्यमाणः शमे शान्तौ अभिरेमे । पापात् विरराम । दमं भेजे । साधुभ्यो धनं ददौ इत्यर्थः ॥ ३३ ॥

**नाधीरवत् कामसुखे ससंजे । न संररंजे विषये जगत्यां ॥**
**धृत्येंद्रियाश्वांश्चपलान्विजिग्ये । बंधूंश्च पौरांश्च गुणैर्जिगाय ॥ ३४ ॥**

अधीरवत् अज्ञवत् । कामसुखेन ससंजे । जगत्यां विषये न ररंजे न रक्तोऽभूत् । चपलान् इंद्रियाश्वान् धृत्या धैर्येण विजिग्ये । अन्यत्स्पष्टं ॥ ३४ ॥

**नाध्यैष्ट दुःखाय परस्य विद्यां । ज्ञानं शिवं यत्तु तदध्यगीष्ट ॥**
**स्वाभ्यः प्रजाभ्यो हि यथा तथैव । सर्वप्रजाभ्यः शिवमाशशंसे ॥ ३५ ॥**

परस्य परसंबंधिनीं ज्ञानरहितविषयप्रतिपादिकामित्यर्थः । विद्यां दुःखाय

---

१ C हावैः for भावैः  २ C. तं तत्र नार्यो ... धितैश्च A ... for ...वैः । ३ C ... ४ C पुण्य for विश्व. ५ C विषमं जनन्यां.

दुःखकारणाय न अर्थयेत् । ज्ञानरतिरिक्तविद्याध्ययने हि अभिमानादिर्संसार-दुःखं प्रमज्येत इति तां नार्थयेत्यर्थः । प्रजाभ्यः संततिभ्यः प्रकृतिभ्यो वा । सर्वप्रजाभ्यः सर्वलोकेभ्यः । 'प्रजास्यात्संततौ जने' इति कोशः ॥ ३५ ॥

तं भासुरं चांगिरसाधिदेवं ।
यथावदानर्च तदायुषे सः ॥
जुहाव हव्यान्यकृशे कृशानौ ।
ददौ द्विजेभ्यः कृशनं च गाश्च ॥ ३६ ॥

भासुरं तेजस्विनं मुख्यं गुरुं । तदायुषे सर्वसिद्ध्यायुःप्राप्तये । अकृशे स्थूले प्रदीप्ते इत्यर्थः । कृशानौ अग्नौ । कृशनं सुवर्णं । अत्र कनकमितिपाठः साधुः सुवर्ण-वाचिकृशनशब्दस्य लोके प्रयोगानुपलब्धेः । गाः धेनूः ॥ ३६ ॥

सस्नौ शरीरं पवितुं मनश्च । तीर्थांबुभिश्चैव गुणांबुभिश्च ॥
वेदोपदिष्टं सममात्मजं च । सोमं पपौ शांतिसुखं च हार्दं ॥३७॥

शरीरं मनश्च पवितुं पवित्रीकर्तुं क्रमेण तीर्थांबुभिः तीर्थोदकैः गुणांबुभिः गुणाः शांत्यादयः त एव अंबूनि तैः सस्नौ स्नातवान् । तीर्थांबुभिः शरीरं पवि-त्रीकृतवान् शांत्यादिभिः मनश्च पवित्रीकृतवान् इत्यर्थः । वेदोपदिष्टं सोमं यज्ञ-विशेषसोमरसं आत्मजं आत्मज्ञानोत्पन्नं आत्मनः आत्मविषयकज्ञानात् जातं । आ-त्मशब्द आत्मविषयकज्ञाने लाक्षणिकः । तस्मिन् उपपदे जनधातोः अन्येष्वपि दृश्यते इति डप्रत्ययः । हार्दं हृदये वर्तमानं शांतिसुखं च इति सममेव पपौ । यज्ञयागादिकर्तापि अभिमानशून्यतया आत्मानंदभोक्ता ऽप्यासीदित्यर्थः ॥ ३७ ॥

सांत्वं यभाषे न च नार्थवद्य- ।
ज्जजल्प तत्त्वं न च विप्रियं यत् ॥
सांत्वं ह्यतत्त्वं परुषं च तत्त्वं ।
ह्रियाशकन्नात्मन एव वक्तुम् ॥ ३८ ॥

यत् सांत्वं अर्थवत् न एतादृशं न बभाषे । किंतु तात्त्विकार्थविशिष्टं सांत्व-मुवाचेत्यर्थः । यत् तत्त्वमपि विप्रियं न तज्जजल्प । तत्त्वमपि प्रियं यथा भवति तथा जजल्पेत्यर्थः । हि यस्मात् यत् सांत्वं तत् अतत्त्वं तत्त्ववादरहितं भवति । तत्त्वं परुषं भवति । इति आत्मन एव ह्रिया वक्तुं नाशकत् । किंतु पूर्वोक्तरीत्या अवददित्यर्थः ॥ ३८ ॥

इष्टेष्वनिष्टेषु च कार्यवस्तु ।
न रागदोषाश्रयतां प्रपेदे ॥

१ A °मात्मजेन.

शिवं सिषेवेऽव्यवहारलब्धं ।
अन्यद्धि मेने न तथा यथावत् ॥ ३९ ॥

इष्टेषु सुहृत्सु अनिष्टेषु शत्रुषु च । उभयविधेषु कार्यवत्सु कार्यार्थिषु । रागौ प्रेममात्सर्यौ ते एव दोषौ तदाश्रयतां न प्रपेदे । 'रागोऽनुरागे मात्सर्ये' इति कोशः। व्यवहारेण प्रजासु नीतिदर्शनेन लब्धं । तथा पूर्वोक्तवत् अन्यत् उक्तातिरिक्तं इष्टेषु प्रेमवत्त्वादि यथावत् यथायोग्यं न मेने ॥ ३९ ॥

आशावतश्चाभिगतस्य सद्यो । देयांबुभिस्तर्षमचेच्छिदिष्ट ॥
युद्धादृते वृत्तपरश्वधेनारिदर्पमुद्वृत्तमवेभिदिष्ट ॥ ४० ॥

आशावतः इच्छावतः अभिगतस्य प्राप्तस्य याचकस्येत्यर्थः । देयानि दानानि तान्येव अंबूनि तैः तर्षं इच्छां अचेच्छिदिष्ट छेदितवान्। छिद् धातोर्यङतात्लुङ् । युद्धादृते युद्धं विना वृत्तं सदाचारः स एव परश्वधः कुठारः तेन उद्वृत्तं अरिदर्पं शत्रुदर्पं अवेभिदिष्ट पुन: पुन: भिन्नवान्। 'अतृणे पतितो वह्निः स्वयमेवोपशाम्यति' इति न्यायेन एतस्य शांतस्वभावत्वे विरोधिद्वितीयाभावात् शत्रूणां गर्वः स्वयमेव शांतः अभूत् इत्यर्थः । हि दर्पमिति पाठे हि शब्दः पादपूरणार्थः हेत्वर्थो वा ॥ ४० ॥

एकं विनिन्ये स जुगोप सप्त । सप्तैव तत्याज ररक्ष पंच ॥
प्राप त्रिवर्गं बुबुधे त्रिवर्गं । जज्ञे द्विवर्गं प्रजहौ द्विवर्गम् ॥४१॥

एकं मनः राज्यं वा विनिन्ये शिक्षितवान् । सप्त राज्यांगानि जुगोप । सप्त स्वर्गादिसप्तधातून् तत्याज तत्र अनास्थ आसीदित्यर्थः । पंच प्राणान् ररक्ष । त्रिवर्गं धर्मार्थकामान् प्राप । त्रिवर्गं वृद्धिस्थानक्षयान् बुबुधे । द्विवर्गं मित्रद्वयं जज्ञे ज्ञातवान् । द्विवर्गं सुखदुःखादिद्वंद्वानि प्रजहौ तत्याज ॥ ४१ ॥

कृतागसोऽपि प्रतिपत्य वध्या-
न्नाजीघनन्नापि रुषा ददर्श ॥
बबन्ध सांत्वेन च रज्जुभिस्तां-
स्त्यागोऽपि तेषां ह्यनपायदृष्टः ॥ ४२ ॥

कृतागसः कृतापराधान् अतएव वध्यान् वधार्हान् एतादृशानपि नाजीघनत् न हिंसितवान् इत्यर्थः । केवलं न हिंसितवान् इति न किंतु रुषापि न ददर्श । तर्हि किं मोक्तव्य मत्याज नेत्याह—सांत्वेन सांत्वनरूपरज्जुभिः बबंध संयोजितवान् । कदाचित् त्यागप्रसंगेऽपि तेषां पूर्वोक्तानां त्यागोऽपि अनपायाय नाशाभावाय दृष्टः अनपायदृष्टः । यथा तेषां नाशो न भवेत् तथा तत्याजेत्यर्थः ॥४२॥

१ C ददृ हि मेने. २ C ०वने धार्मिकगताय सद्यो. ३ C ०ब्जेन हिंदर्वे० ४ A हि [illegible] ५ A [illegible] ६ C [illegible] ७ C ०माजीधनमपि. ८ C A [illegible] ९ A [illegible]

**आर्षाण्यचारीत्परमव्रतानि । वैराण्यहासीच्चिरसंभृतानि ॥**
**यशांसि चापद्गुणगंधवंति । रजांस्यहासीन्मलिनीकराणि ॥४३॥**

आर्षाणि ऋषिमंत्रंधानि परमव्रतानि श्रेष्ठव्रतानि अचारीत् आचरितवान् । चिरसंभृतानि चिरकृतानि वैराणि द्वेषान् अहासीत् अत्याक्षीत् । गुणानां गंधः संबंधः सः अस्ति येषां तानि । 'गंधोगंधक आमोदे लेशे संबंधगर्वयोः' इति विश्वः । सद्गुणमूलकानीत्यर्थः । यशांसि आपत् । मलिनीकराणि मालिन्योत्पादकानि रजांसि रजोगुणकार्याणि द्वेषादीनि अहासीत् ॥ ४३ ॥

**न चाजिहीर्षीद्बलिमप्रवृत्तं । न चाचिकीर्षीत्परवस्त्वभीप्सां ॥**
**न चाविवक्षीद्द्विषतामधर्मं । न चादिधीर्षीध्दृदयेन मन्युम् ॥४४॥**

प्रवृत्तः वर्तमानः तथा न भवतीति अप्रवृत्तः तं । प्रवृत्तादधिकं नवीनमिति यावत् । वलिं करं न चाजिहीर्षीत् हरणेच्छां न कृतवान् । परवस्तुनः अभीप्सां कांक्षां न चाचिकीर्षीत् । द्विषतां शत्रूणां अधर्मं न चाविवक्षीत् वक्तुं नैच्छत् । मन्युं क्रोधं हृदयेन नादिधीर्षीत् धर्तुं नैच्छत् ॥ ४४ ॥

**तस्मिंस्तथा भूमिपतौ प्रवृत्ते । भृत्याश्च पौराश्च तथैव चेरुः ॥**
**शमात्मके चेतसि सुप्रसन्ने । प्रयुक्तयोगस्य यथेंद्रियाणि ॥४५॥**

तस्मिन् भूमिपतौ शुद्धोदने तथा पूर्वोक्तप्रकारेण प्रवृत्ते सति भृत्याः सेवकाः पौराः नागरिकाः तथैव राजवत् चेरुः । शमः शांतिः आत्मा स्वभावो यस्य । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावः' इत्यमरः । शैषिकः कप् । तस्मिन् चेतसि इत्यर्थः । प्रयुक्तः आरब्धः योगः येन तस्य यथा इंद्रियाणि मनोवच्छांतियुतानि भवंति तथा तस्य पौराः भृत्या इति पूर्वेणान्वयः । यद्यदाचरति श्रेष्ठ इति न्यायेन सर्वेपि शांतवृत्तयो बभूवुरित्यर्थः ॥ ४५ ॥

**काले ततश्चारुपयोधरायां । यशोधरायां सुयशोधरायां ॥**
**शौद्धोदने राहुसपत्नवक्त्रो । जज्ञे सुतो राहुल एव नाम्ना ॥४६॥**

ततः चारुपयोधरायां सुस्तन्यां सुयशोधरायां उत्तमयशस्विन्यां यशोधरायां एतन्नाम्न्यां सर्वार्थसिद्धपत्न्यां । शौद्धोदनेः शुद्धोदनपुत्रात् सर्वार्थसिद्धात्सकाशात् राहोः सपत्नः चन्द्रः तद्वत् वक्त्रं मुखं यस्य नाम्ना राहुल एव सुतः जज्ञे ॥ ४६ ॥

**अथेष्टपुत्रः परमप्रतीतः । कुलस्य वृद्धिं प्रति भूमिपालः ॥**
**यथैव पुत्रप्रसवे ननंद । तथैव पौत्रप्रसवे ननंद ॥४७॥**

अथ पौत्रप्रसूत्यनंतरं कुलस्य वृद्धिं प्रति इष्टपुत्रः अभीष्टतनयः परमप्रतीतः परमप्रसिद्धः । पुत्रप्रसवे पुत्रोत्पत्तौ ॥ ४७ ॥

---

१ A स्वमार्जीन्न०. २ C रतमिच्या ३ C दिधर्षीध्ह. ४ C नि०— ५ A रं०न्धोदने

पुत्रस्य मे पौत्रगतो ममेव । स्नेहः कथं स्यादिति जातहर्षः ॥
काले स तं तं विधिमाललंबे । पुत्रप्रियः स्वर्गमिवारुरुक्षन् ॥४८॥

ममेव मे पुत्रस्य पौत्रगतः स्नेहः प्रेम कथं स्यात् । यथा मम पुत्रे स्नेह एवं मत्पुत्रस्य स्वपुत्रे प्रेम कथं स्यात् इति जातहर्षः संजाताह्लादः काले योग्यकाले तं तं विधिं संस्कारं आललंबे । पुत्रेण जयति स्वर्गमित्यादिवचनेन स्वर्गमारुरुक्षन्निव तं तं विधिं आललंबे इति पूर्वेणान्वयः ॥ ४८ ॥

स्थित्वा पथि प्राथमकल्पिकानां । राजर्षभाणां यशसान्वितानाम् ॥
शुक्लान्यमुक्त्वापि तपांस्यतप्त । यज्ञैश्च हिंसारहितैरयष्ट ॥ ४९ ॥

प्राथमकल्पिकानां प्रथमकल्पः आद्यारंभः प्रयोजनं येषां ते प्राथमकल्पिकाः तेषां । प्रयोजनमिति ठक् । राजश्रेष्ठानां पथि स्थित्वा शुक्लानि रूप्याणि तदुपलक्षितं राज्यमित्यर्थः अमुक्त्वापि अत्यक्त्वापि तपांसि कृच्छ्रचांद्रायणादीनि अतप्त । हिंसारहितैः पिष्टपशुगाद्यैः यज्ञैः अयष्ट । एतेन पिष्टपशुसाध्ययज्ञा एव निष्कामानां धर्मा इत्युक्तं भवति ॥ ४९ ॥

अजाज्वलिष्टाथ स पुण्यकर्मा । नृपश्रिया चैव तपश्रिया च ॥
कुलेन वृत्तेन धिया च दीप्तस्तेजः सहस्रांशुरिवोत्सिसृक्षुः ॥ ५० ॥

अथ पुण्यकर्मा स नृपः नृपश्रिया राजलक्ष्म्या तपःश्रिया तपोलक्ष्म्या कुलेन सद्वंशेन वृत्तेन सदाचारेण धिया सद्बुध्या दीप्तः सहस्रांशुरिव सूर्य इव तेजः उत्सिसृक्षुः उत्स्रष्टुमिच्छुः सन् अजाज्वलिष्ट ॥ ५० ॥

स्वायंभुवं चार्चिकमर्चयित्वा ।
जजाप पुत्रस्थितये स्थिरश्रीः ॥
चकार कर्माणि च दुष्कराणि ।
प्रजाः सिसृक्षुः क इवादिकाले ॥ ५१ ॥

स्थिरश्रीः पुत्रस्थितये आर्चिकं अर्च्यं पूजार्हमित्यर्थः । एतादृशं स्वायंभुवं ब्रह्मणः पुत्रं मूलपुरुषं मनुमित्यर्थः । अर्चयित्वा जजाप जप्यान् इति शेषः । आदिकाले प्रजाः सिसृक्षुः क इव ब्रह्मा इव दुष्कराणि कर्तुमशक्यानि कर्माणि चकार ॥ ५१ ॥

तत्याज शस्त्रं विममर्श शास्त्रं । शमं सिषेवे नियमं विषेहे ॥
वशीव कंचिद्विषयं न भेजे । पितेव सर्वान्विषयान् ददर्श ॥ ५२ ॥

विममर्श विचारयामास । नियमं इत्यादि विषेहे सोढवान् । वशीव जितेंद्रिय इव कंचिन् कर्मापि । विषयान् देशान् ददर्श पालयामासेत्यर्थः ॥ ५२ ॥

बभार राज्यं स हि पुत्रहेतोः ।
पुत्रं कुलार्थं यशसे कुलं तु ॥

१ C स्वैरान. २ C पुत्र. ३ C कर्म. ४ C वशेष. ५ C विषयान्.

स्वर्गाय शब्दं दिवमात्महेतो-।
धर्मार्थमात्मस्थितिमाचकांक्ष ॥ ५३ ॥

स हि पुत्रहेतोः राज्यं बभार । कुलार्थं वंशवृद्धये पुत्रं बभार । यशसे कुलं । शब्दं वेदशब्दं तत्प्रोक्तकर्माणीतियावत् । दिवं स्वर्गं आत्महेतोः । आत्मस्थितिं आत्मसत्तां धर्मार्थं आचकांक्ष इयेष ॥ ५३ ॥

एवं स धर्मं विविधं चकार । सद्भिर्निपात्यं श्रुतितश्च सिद्धं ॥
दृष्ट्वा कथं पुत्रमुखं सुतो मे । वनं न यायादिति नाथमानः ॥ ५४ ॥

विविधं अनेकविधं सद्भिर्निपात्यं सद्भिराचरितमित्यर्थः । न केवलं सद्भिराचरितमेव किंतु श्रुतितश्च सिद्धं वेदप्रतिपाद्यं एतादृशं धर्मं चकार । मे सुतः पुत्रमुखं दृष्ट्वा वनं कथं न यायात् इति नाथमानः याचमानः धर्मं चकारेति पूर्वेणान्वयः ॥ ५४ ॥

रिरक्षिषंतः श्रियमात्मसंस्था । रक्षंति पुत्रान्भुवि भूमिपालाः ॥
पुत्रं नरेंद्रः स तु धर्मकामो । ररक्ष धर्माद्विषयेष्वमुंचत् ॥ ५५ ॥

आत्मनि संस्था स्थितिर्येषां ते आत्मनिष्ठा इत्यर्थः । श्रियं राज्यलक्ष्मीं रक्षितुमिच्छन्तः । हेतुगर्भविशेषणमिदं । पुत्रान् रक्षंति । श्रीरक्षणार्थं पुत्रान् रक्षंतीत्यर्थः । स तु धर्मकामः नरेंद्रः पुत्रं ररक्ष धर्माद्विषयेषु अमुंचन् । धर्माद्विषयेषु यत् अमुंचन् तेन कर्मणा पुत्रं ररक्षेत्यर्थः । धर्मे निमग्नो हि राज्यश्रियं कदाचित् जह्यात् इति पुत्रं विषयेष्वेव अमुंचत् ॥ ५५ ॥

वनमनुपमसत्वा बोधिसत्वास्तु सर्वे ।
विषयसुखरसज्ञा जग्मुरुत्पन्नपुत्राः ॥
अत उपचितकर्मा रूढमूलेऽपि हेतौ ।
स रतिमुपसिषेवे बोधिमापन्न यावत् ॥ ५६ ॥

नास्ति उपमा यस्य तत् अनुपमं सत्वं अंतःकरणं येषां ते तथा बोधिसत्वाः महाज्ञानिनः विषयसुखस्य रसं जानन्तीति तथा उत्पन्नपुत्राः वनं जग्मुः । उपचितं वृद्धिंगतं कर्म यस्य सः । हेतौ वनगमनकारणे पुत्ररूपे रूढमूलेपि उत्पन्नेऽपि इत्यर्थः । यावत् बोधं न आपत् तावत् रतिं उपसिषेवे ॥ ५६ ॥

## ॥ इति श्रीबुद्धचरिते महाकाव्येऽन्तःपुरविहारो नाम द्वितीयः सर्गः ॥

इतिश्री ५ पदवाक्यप्रमाणपारावारीणमहामहोपाध्यायश्रीगोपालाचार्यांतेवासिना निगुडकरोपनामकनारायण ( दत्तात्रेय ) शर्मणा विरचितायां तत्त्वदीपिकाख्यायां बुद्धचरितसंक्षिप्तव्याख्यायां द्वितीयः सर्गः ॥

---

१ A स्वर्गाय गर्भिर्दिवमात्म॰. २ C सिद्धं. ३ C दृष्ट्वापि॰.

# तृतीयः सर्गः।

ततः कदाचिन्मृदुशाद्वलानि। पुंस्कोकिलोन्नादितपादपानि॥
शुश्राव पद्माकरमंडितानि। शीतेन बद्धानि स काननानि॥ १॥

अथ शौद्धोदने· वैराग्यप्रादुर्भावप्रदर्शनार्थं तत्कारणीभूतां उद्यानविहाराय उद्याने जिगमिषां दर्शयति। तत इति। पुत्रोत्पत्त्यनंतरं प्रासादक्रीडोत्तरं वा। मृदूनि शाद्वलानि शादहरिताः प्रदेशा येषु। पुमांसश्च ते कोकिलाश्च पुंस्कोकिलाः तैः उन्नादिता· शब्दिताः पादपा वृक्षा येषु तानि। पद्माकराः पद्मखनयः तडागा इत्यर्थः तैः मंडितानि भूषितानि। शीतेन शैलेन। 'शीतं हिमगुणे क्लीवं' इति मेदिनी। बद्धानि युक्तानीत्यर्थः। एतादृशानि काननानि शुश्राव। अत्र काननानीत्यनेन काननानां गुणा उपलक्ष्यंते। काननानां श्रवणाऽनर्हत्वात्। मंचाः क्रोशंतीतिवत्। एतेन काननानां मनोहारित्वं सूचितम्॥ १॥

श्रुत्वा ततः स्त्रीजनवल्लभानां। मनोज्ञभावं पुरकाननानां॥
बहिः प्रयाणाय चकारबुद्धिमंतर्गृहे नाग इवावरुद्धः॥ २॥

अंतर्गृहे गृहमध्ये अवरुद्धः रोधं प्रापितः नाग इव हस्ती इव। अनेन तस्य अंतर्मदावस्था सूचिता। स्त्रीजनस्य वल्लभानां दयितानां। पुरकाननानां नगरारण्यानां। मनोज्ञानां मनोहाराणां भावः तं श्रुत्वा बहिः प्रयाणाय बहिर्गमनाय बुद्धिं चकार॥ २॥

ततो नृपस्तस्य निशम्य भावं।
पुत्राभिधानस्य मनोरथस्य॥
स्नेहस्य लक्ष्म्या वयसश्च योग्या-
माज्ञापयामास विहारयात्रां॥ ३॥

ततः बहिःप्रयाणेच्छानंतरं नृपः शुद्धोदनः तस्य सर्वार्थसिद्धस्य भावं बहिर्जिगमिषारूपं पुत्र इति अभिधानं यस्य एतादृशो यो मनोरथः तस्य। स्नेहस्य प्रेम्णः लक्ष्म्याः ऐश्वर्यस्य वयसः तारुण्यस्य योग्या अनुरूपां विहारस्य यात्रां विहारोपयोगिनीं यात्रामित्यर्थः। आज्ञापयामासेत्यन्वय·॥ ३॥

निवर्तयामास च राजमार्गे। संपातमार्तस्य पृथग्जनस्य॥
माभूत्कुमारः सुकुमारचित्तः। संविग्नचेता इति मन्यमानः॥ ४॥

सुकुमारचित्तः मृदुलांत·करणः। कुमारः संविग्नचेताः उद्विग्नांऽतःकरणः मा भूत्

१ C वीते निबद्ध०.

इति मन्यमानः नृपः राजमार्गे आर्तस्य पीडितस्य पृथग्जनस्य प्राकृतजनस्य नीचजनस्येति यावत्। संपातं इतस्ततः संचारं निवर्तयामासेत्यन्वयः ॥ ४ ॥

प्रत्यंगहीनान्विकलेंद्रियांश्च ।
जीर्णातुरादीन्कृपणांश्च भिक्षून् ॥
ततः समुत्सार्य परेण साम्ना ।
शोभां परां राजपथस्य चक्रुः ॥ ५ ॥

राजमार्गे आर्तादिकानां संपातं निवर्तयामासेत्युक्तं तदेव द्रढयति। प्रत्यंगेति। ततः राजमार्गात् प्रत्यंगहीनान् अवयवविकलान्। विकलेंद्रियान् हीनेंद्रियान्। जीर्णातुरादीन् आदिना कुवेषनीचादीन्। कृपणान् कदर्यान्। भिक्षून् परिव्राजकान्। समुत्सार्य दूरीकृत्य । ननु दीनादीनां राजमार्गात् अपसारेण कठोरत्वं प्रसज्येत अत आह। परेण साम्नेति । आर्जवेनैव इदमपसारणं न तु बलेनेत्यर्थः। परेण उत्कृष्टेन साम्ना सान्त्वेन राजपथस्य राजमार्गस्य परां तोरणादिना उत्कृष्टां शोभां चक्रुः ॥ ५ ॥

ततः कृते श्रीमति राजमार्गे। श्रीमान्विनीतानुचरः कुमारः॥
प्रासादपृष्ठादवतीर्य काले। कृताभ्यनुज्ञो नृपमभ्यगच्छत् ॥ ६ ॥

ततः राजमार्गशोभाकरणानंतरं। श्रीमति शोभायुक्ते राजमार्गे कृते सति। श्रीमान् लक्ष्मीवान्। विनीतानुचरः शिक्षितभृत्यः नम्रसेवको वा कुमारः प्रासादपृष्ठात् राजगृहोर्ध्वभागस्थक्रीडास्थानात् अवतीर्य। काले सुमुहूर्ते इत्यर्थः। कृताभ्यनुज्ञः पितृगृहप्रवेशार्थं गृहीतपित्रनुज्ञः सन् नृपं शुद्धोदनं अभ्यगच्छत् ॥ ६ ॥

अथो नरेंद्रः सुतमागताश्रुः।
शिरस्युपाघ्राय चिरं निरीक्ष्य ॥
गच्छेति चाज्ञापयति स्म वाचा।
स्नेहान्न चैनं मनसा मुमोच ॥ ७ ॥

अथो इति। अथो पुत्रसंमीलनानंतरं। नरेंद्रः शुद्धोदनः। आगताश्रुः साश्रुप्लवः सन्। पुत्रं शिरसि उपाघ्राय चिरं निरीक्ष्य च गच्छेति वाचा आज्ञापयति स्म। एनं पुत्रं स्नेहात् हेतोः। मनसः अंतःकरणेन न मुमोच न त्यक्तवान्। केवलं वाचैव गच्छेत्युक्तं मनस्तु तत्र भेदेन संगममार्गादित्यर्थः ॥ ७ ॥

ततः स जांबूनदभांडभृद्भिर्युक्तं चतुर्भिर्निभृतैस्तुरंगैः॥
अक्लीबविद्वच्छुचिरश्मिधारं। हिरण्मयं स्यंदनमारुरोह ॥ ८ ॥

ततः विप्रामनंतरं। स कुमारः। जांबूनदस्य सुवर्णस्य यानि भांडानि अश्वाभरणानि। 'स्याद्भांडमश्वाभरणे' इत्यमरः। तानि बिभ्रद्भिः चतुर्भिः चतुःसंख्याकैः। निभृतैः विनीतैः 'निभृतविनीतप्रश्रिता. समाः' इत्यमरः। तुरंगैः अश्वैः युक्तं।

अह्लीबा महतीत्यर्थः । एतादृशी या विद्युत् चंचला तद्वत् शुचिः श्वेता वा रश्मिधारा किरणपंक्तिर्यस्य एतादृशं हिरण्मयं सौवर्णं । 'दाडिनायनेति निपातनात्साधुः । स्यंदनं रथं आरुरोह ॥ ८ ॥

ततः प्रकीर्णोज्ज्वलपुष्पजालं । विषक्तमाल्यं प्रचलत्पताकं ॥
मार्गं प्रपेदे सदृशानुयात्रश्चन्द्रः सनक्षत्र इवांतरिक्षं ॥ ९ ॥

तत इति । स्यंदनारोहणानंतरं सनक्षत्रः नक्षत्रसहितः चन्द्रः अंतरिक्षमिव आकाशमिव प्रकीर्णानि इतस्ततः लंबितानि उज्ज्वलानि पुष्पजालानि पुष्पमालाः यस्मिन् । विषक्तानि संबद्धानि मालादीनि यस्मिन् । अथवा पुष्पजालपदेन पुष्पसमूहः माल्यपदेन माला गृह्यते । प्रचलत्पताकं चंचलध्वजं एतादृशं मार्गं सदृशानुयात्रः उचितानुगंतृकः कुमारः प्रपेदे ॥ ९ ॥

कौतूहलात्स्फीततरैश्च नेत्रैर्नीलोत्पलैः किं नु विकीर्यमाणः ॥
शनैः शनैः राजपथं जगाहे । पौरैः समंतादभिवीक्ष्यमाणः ॥ १० ॥

कौतूहलादिति । कौतूहलात् कौतुकात् पौरैः नागरिकैः स्फीततरैः प्रफुल्लतरैः नेत्रैः नीलोत्पलैः किंनु विकीर्यमाणः समंतात् अभिवीक्ष्यमाणः अवलोक्यमानः शनैः शनैः मंदं मंदं राजपथं जगाहे ॥ १० ॥

तं तुष्टुवुः सौम्यगुणेन केचिद्ववंदिरे दीप्ततया तथान्ये ॥
सौमुख्यतस्तु श्रियमस्य केचिद्वैपुल्यमाशंसिषुरायुषश्च ॥ ११ ॥

केचित् सौम्यगुणेन हेतुना तं तुष्टुवुः । तथा अन्ये केचित् दीप्ततया भासमानत्वेन ववंदिरे नेमुः । केचित् अस्य श्रियं शोभां लक्ष्मीं वा सुमुखस्य भावः सौमुख्यं तस्मात् आशंसिषुः ईषुः । आयुषः च वैपुल्यं चिरंतनत्वं इत्यर्थः । आशंसिषु' ॥ ११ ॥

निसृत्य नार्यश्च महाकुलेभ्यो । व्यूहाश्च कैरातकवामनानां ॥
कुब्जाः कृशेभ्यश्च निवेशनेभ्यो । देवानुयायिध्वजवत्प्रणेमुः ॥ १२ ॥

निसृत्येति । नार्यः महाकुलेभ्यः महावंशेभ्यः महागृहेभ्यो वा । अपादाने पंचमी । निसृत्य बहिरागत्य तथा कुब्जा मंडलाः । किराता एव कैराताः । प्रज्ञादेराकृतिगणत्वात्स्वार्थेऽण् । कुत्सिताः कैराताः कैरातकाः कुत्सितकिराताः । वामनाः ह्रस्वाः । तेषां व्यूहाः समूहाः कृशेभ्यः सूक्ष्मेभ्यः अल्पेभ्य इत्यर्थः निवेशनेभ्यः गृहेभ्यः निसृत्य देवानुयायी यो ध्वजः तद्वत् प्रणेमुः नमंति स्म । यथा देवानुयायिनः ध्वजाः वायुना नमंति तद्वत् तं नमंति स्म ॥ १२ ॥

---

१ C श्लक्ष्णमैरिव कीर्य॰. २ C कुब्जाश्च. ३ C नार्यः. ४ C धामवत्॰.

ततः कुमारः खलु गच्छतीति ।
श्रुत्वा स्त्रियः प्रेष्यजनात्प्रवृत्तिं ॥
दिदृक्षया हर्म्यतलानि जग्मु-
र्जनेन मान्येन कृताभ्यनुज्ञाः ॥ १३ ॥

तत इति । कुमारः गच्छति खलु इति प्रेष्यजनात् सेवकजनात् प्रवृत्तिं वार्तां श्रुत्वा मान्येन जनेन भर्त्रादिना कृताभ्यनुज्ञाः कृताज्ञाः स्त्रियः दिदृक्षया द्रष्टुमिच्छया हर्म्यतलानि जग्मुः ॥ १३ ॥

ताः स्रस्तकांचीगुणविघ्निताश्च । सुप्तप्रबुद्धाकुललोचनाश्च ॥
वृत्तांतविन्यस्तविभूषणाश्च । कौतूहलेनापि भृताः परेयुः ॥ १४ ॥

तासां संभ्रमं दर्शयति ता इति । स्रस्ताः ध्वस्ताः ये कांचीगुणाः मेखलातंतवः तैः विघ्निताः कृतांतरायाः तथा सुप्तात् स्वापात् प्रबुद्धाः जागरिताः अतएव आकुलानि लोचनानि यासां तथा । वृत्तांतेन कुमारो राजपथेन गच्छतीति वार्ताश्रवणेन विन्यस्तानि विरुद्धन्यस्तानि व्यत्यस्तानीत्यर्थः विभूषणानि याभिः अतएव कौतूहलेनापि भृताः पूर्णाः परेयुः जग्मुरित्यर्थः ॥ १४ ॥

प्रासादसोपानतलप्रणादैः । कांचीरवैर्नूपुरनिस्वनैश्च ॥
वित्रासयन्त्यो गृहपक्षिसंघानन्योन्यवेगाच्च समाक्षिपन्त्यः ॥ १५ ॥

प्रसादेति । प्रासादस्य यानि सोपानानि आरोहणानि तेषु ये तलप्रणादाः पादतलस्थापनयोत्पन्ना ध्वनयः तैः कांचीरवैः मेखलाध्वनिभिः नूपुरनिस्वनैः अन्योन्यवेगात् परस्परवेगात् समाक्षिपन्त्यः परस्परं ताडयन्त्यः गृहपक्षिसंघान् गृहसंबंधिपक्षिसमूहान् वित्रासयन्त्यः इतस्ततश्चालयन्त्यः भवंतीति शेषः । भूषणादिध्वनिभ्यः जातो यो महान् ध्वनिः तेन स्त्रीणां संमर्देन च क्रीडापक्षिणः भीत्या इतस्ततो भ्रमंतीत्यर्थः ॥ १५ ॥

कासांचिदासां तु वरांगनानां । जातत्वराणामपि चोत्सुकानां ॥
गतिं गुरुत्वाज्जगृहुर्विशालाः । श्रोण्यस्तथापीनपयोधराश्च ॥ १६ ॥

कासांचित् आसां उत्सुकानां उत्कंठितानां अतएव जातत्वराणां उत्पन्नत्वराणां एतादृशीनां वरांगनानां विशालाः विस्तृताः श्रोण्यः श्रोणिस्थलस्थितनितंबाः तथा पीनपयोधराः पुष्टस्तनाः गुरुत्वात् गतिं जगृहुः । औत्सुक्येन गतिविषये त्वरां कुर्वन्त्योऽपि नितंबानां स्तनानां च भारेण झटिति गंतुं नाशक्नुवन् इति तात्पर्यं ॥ १६ ॥

---

१ C स्रस्त०. २ C गो for श्रो. ३ C श्रोणीभराः.

शीघ्रं समर्थापि तु गंतुमन्या।
गतिं निजग्राह ययौ न तूर्णं ॥
ह्रिया प्रगल्भानि निगूहमाना ।
रहः प्रयुक्तानि विभूषणानि ॥ १७॥

अन्या काचन स्त्री शीघ्रं गंतुं समर्थाऽपि रहः प्रयुक्तानि एकाते धृतानि प्रगल्भानि दीप्तिमंति महांति वा विभूषणानि ह्रिया निगूहमाना संवृण्वाना सती गतिं निजग्राह अवारुणत्। अतएव तूर्णं न ययौ। इयं एकांते रता इति लोकैर्मा ज्ञायि अतः रतकालधृतभूषणानां निगूहनार्थं उद्युक्ता अतः समर्थापि शीघ्रं न गतेत्यर्थः ॥१७॥

परस्परोत्पीडनपिंडितानां । संमर्दसंक्षोभितकुंडलानां ॥
तासां तदा सस्वनभूषणानां । वातायनेष्वप्रशमो बभूव ॥ १८ ॥

परस्परं अन्योन्यं यत् पीडनं ताडनं तेन पिंडितानां संघीभूतानां संमर्देन संघर्षेण संक्षोभितानि कुंडलानि यासां सस्वनानि सशब्दानि भूषणानि यासां तासां स्त्रीणां तदा कुमाराऽऽगमनकाले वातायनेषु गवाक्षेषु अप्रशमः अशांतिः बभूव। कुमारदिदृक्षया सर्वासां गवाक्षे मुखार्पणेन संमर्दजन्यः ऊष्मातिरेको बभूवेत्यर्थः ॥

वातायनेभ्यस्तु विनिःसृतानि ।
परस्परोपाश्रितकुंडलानि ॥
स्त्रीणां विरेजुर्मुखपंकजानि ।
सक्तानि हर्म्येष्विव पंकजानि ॥ १९ ॥

वातायनेति । परस्परं उपाश्रितानि संलग्नानि कुंडलानि कर्णभूषणानि येषां तानि । वातायनेभ्यः गवाक्षेभ्यः विनिःसृतानि बहिर्गतानि स्त्रीणां मुखपंकजानि मुखकमलानि हर्म्येषु अट्टेषु सक्तानि संलग्नानि पंकजानि कमलानि इव विरेजुः शुशुभिरे ॥ १९ ॥

ततो विमानैर्युवतीकलापैः । कौतूहलोद्घाटितवातयानैः ॥
श्रीमत्समंतान्नगरं बभासे । वियद्विमानैरिव साप्सरोभिः ॥ २० ॥

ततः कौतूहलेन उद्घाटितानि वातयानानि गवाक्षा येषां युवतिकलापैः स्त्रीसमूहैः विमानैः राजगृहैः हेतुभिः श्रीमत् तन्नगरं समंतात् साप्सरोभिः अप्सरःसहितैः विमानैः वियत् इव बभासे । एतेन तन्नगरस्थगृहाणामत्युच्चत्वं ध्वनितं ॥ २० ॥

वातायनानामविशालभावा-
दन्योन्यगंडार्पितकुंडलानि ॥
मुखानि रेजुः प्रमदोत्तमानां ।
बद्धाः कलापा इव पंकजानां ॥ २१ ॥

---

१ C दर्शित.

वातायनानां अविशालभावात् अविशालत्वात् स्वल्पावकाशत्वादिति यावत् अन्योन्येषां गण्डेषु कपोलेषु अर्पितानि कुंडलानि येषां एतादृशानि प्रमदोत्तमस्त्रीणां मुखानि पंकजानां बद्धाः कलापा इव समूहा इव रेजुः शुशुभिरे॥२१॥

**तस्मिन्कुमारं पथि वीक्षमाणाः। स्त्रियो बभुर्गामिव गन्तुकामाः॥**
**ऊर्ध्वोन्मुखाश्चैनमुदीक्षमाणा नरा बभुर्द्यामिव गन्तुकामाः ॥२२॥**

तस्मिन् पथि मार्गे कुमारं वीक्षमाणाः स्त्रियः गां पृथिवीं गन्तुकामा प्राप्तुकामा इव बभुः। तथा ऊर्ध्वोन्मुखा ऊर्ध्वं उद्गतं मुखं येषां ते उदीक्षमाणा विलोकयन्तो नरा द्यां आकाशं गन्तुकामा इव बभुः। एतेन स्त्रीपुरुषाणां अधोभागे ऊर्ध्वभागे च विलोकने औत्सुक्यं दर्शितम् ॥ २२ ॥

**दृष्ट्वा च तं राजसुतं स्त्रियस्ता**
**जाज्वल्यमानं वपुषा श्रिया च ॥**
**धन्यास्य भार्येति शनैरवोच-**
**ञ्शुद्धैर्मनोभिः खलु नान्यभावात् ॥ २३ ॥**

ताः स्त्रियः वपुषा श्रिया च जाज्वल्यमानं तं राजसुतं दृष्ट्वा अस्य भार्या धन्या इति शुद्धैः मनोभिः अवोचन्। अन्यभावात् अन्याभिप्रायात् एतादृशः पतिः अस्माकं लाभं कथं भवेत् इत्याकारकात् न खलु नावोचन् खलु ॥ २३ ॥

**अयं किल व्यायतपीनबाहू**
**रूपेण साक्षादिव पुष्पकेतुः ॥**
**त्यक्त्वा श्रियं धर्ममुपैष्यतीति ।**
**तस्मिन्स्त्रियो गौरवमेव चक्रुः ॥ २४ ॥**

स्त्रीणामुक्तिराह अयमिति। व्यायतौ दीर्घौ पीनौ पुष्टौ च बाहू भुजौ यस्य एतादृशः रूपेण सौंदर्येण साक्षात् प्रत्यक्षं यथा स्यात्तथा पुष्पकेतुः मदन इव अयं राजकुमारः श्रियं राजलक्ष्मीं त्यक्त्वा धर्मं वैराग्यरूपं उपैष्यति किल इति तस्मिन् ताः स्त्रियः गौरवमेव आदरमेव चक्रुः ॥ २४ ॥

**कीर्णं तथा राजपथं कुमारः। पौरैर्विनीतैः शुचिधीरवेषैः ॥**
**तत्पूर्वमालोक्य जहर्ष किंचिन्मेने पुनर्भावमिवात्मनश्च ॥२५॥**

कीर्णमिति। कुमारः शुचिः पवित्रः धीरश्च वेषः वेषो येषां एतादृशैः विनीतैः नम्रैः पौरैः कीर्णं व्याप्तं स एव पूर्वः तत्पूर्वः तं। पूर्वं कदापि अनवलोकितत्वात् इदमेव प्रथमदर्शनमित्यर्थः। एतादृशं राजपथं आलोक्य किंचिज्जहर्ष पुनः आत्मनः स्वस्य भावमिव अन्तःकरणमिव मेने। यथा स्वान्तःकरणं अनेककल्पनाभिर्व्याप्तं तद्वदेव अयं अनेकविधविचित्रपदार्थव्याप्त इति मेने ॥ २५ ॥

१ C ह्रि ता.

**पुरं तु तत्स्वर्गमिव प्रहृष्टं । शुद्धाधिवासाः समवेक्ष्य देवाः ॥**
**जीर्णं नरं निर्ममिरे प्रयातुं । संचोदनार्थं क्षितिपात्मजस्य ॥२६॥**

शुद्धाधिवासाः शुद्धः पवित्रः अधि उपरि स्वर्गे वासो येषां एतादृशाः । जीर्णं वृद्धं । संचोदनार्थं संसारनिवृत्तिरूपप्रेरणार्थम् ॥ २६ ॥

**ततः कुमारो जरयाभिभूतं । दृष्ट्वा नरेभ्यः पृथगाकृतिं तम् ॥**
**उवाच संग्राहकमागतास्थस्तत्रैव निष्कंपनिविष्टदृष्टिः ॥ २७ ॥**

जरयाऽभिभूतं जराविशिष्टं । पृथगाकृतिं भिन्नाकारं । तरुणेभ्यः भिन्नः वृद्धाकारो भवतीति सुप्रसिद्धं । संग्राहकं रथरश्मिग्रहणकर्तारं सूतमित्यर्थः । आगतास्थः तज्जिज्ञासाया उत्पन्नास्थ इत्यर्थः । तत्रैव यत्र स वृद्ध आसीत् तत्रैवेत्यर्थः । निविष्टदृष्टिः निहितचक्षुः । अन्यत्सुगमम् ॥ २७ ॥

**क एष भोः सूत नरोऽभ्युपेतः । केशैः सितैर्यष्टिविषक्तहस्तः ॥**
**भ्रूसंवृताक्षः शिथिलानतांगः । किं विक्रियैषा प्रकृतिर्यदृच्छा ॥२८॥**

अभ्युपेतः प्राप्तः केशैः सितैः युक्त इत्यर्थः । यष्टिविषक्तहस्तः यष्टिस्थितहस्तः भ्रूसंवृताक्षः अतिवार्धक्येन भ्रुकुट्याच्छादितनेत्रः शिथिलानताङ्गः शिथिलनम्रकायः । एषा किं विक्रिया उत प्रकृतिः अथवा यदृच्छा ॥ २८ ॥

**इत्येवमुक्तः स रथप्रणेता । निवेदयामास नृपात्मजाय ॥**
**संरक्ष्यमप्यर्थमदोषदर्शी । तैरेव देवैः कृतबुद्धिमोहः ॥ २९ ॥**

संरक्ष्यमपि गोपनीयमपि असितर्षिप्रोक्तं एतस्य भाविनं अर्थं एतेन मा ज्ञायीति गोपनीयमपीत्यर्थः । ननु एतादृशं अर्थं कथं प्रकटितवान् अत आह—अदोषदर्शीति दोषं मिथ्यात्वरूपं न दर्शयति न कथयति इति अदोषदर्शी । ननु 'स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे । इति न्यायेन महाहानिप्रसंगे मिथ्यापि वक्तुं योग्यं अत आह—देवैः कृतबुद्धिमोह इति । देवकृतबुद्धिमोहादेव तेनोक्तं कैकेयीवत् ॥ २९ ॥

**रूपस्य हन्त्री व्यसनं बलस्य ।**
**शोकस्य योनिर्निधनं रतीनाम् ॥**
**नाशः स्मृतीनां रिपुरिंद्रियाणा-**
**मेषा जरा नाम ययैष भग्नः ॥ ३० ॥**

व्यसनं नाशकं योनिः कारणं । निधनं मरणं जराया प्राप्तायां रतेरभावादित्यर्थः । यया एष भग्नः एषा जरा नाम ॥ ३० ॥

**पीतं ह्यनेनापि पयः शिशुत्वे । कालेन भूयः परिसृष्टमुर्व्याम् ॥**
**क्रमेण भूत्वा च युवा वपुष्मान् । क्रमेण तेनैव जरामुपेतः ॥ ३१ ॥**

अनेनापि पुरोवर्तिना पुरुषेणापि । अपिशब्दः सर्वक्रियाणां इतरैः सह साम्येपि इत्यर्थबोधनार्थः । भूयः इत्यव्ययं । अथवा भूयः परिस्पृष्टमित्यन्वयः । रिंगणादिना भूस्पर्शादिकृतमित्यर्थः । वपुष्मान् प्रशस्तदेहवान् । तेनैव क्रमेण शिशुत्वानंतरं रिंगणकर्तृत्वं इत्यादिक्रमेणेत्यर्थः ॥ ३१ ॥

इत्येवमुक्ते चलितः स किंचि-
द्राजात्मजः सूतमिदं बभाषे ॥
किमेष दोषो भविता ममापी-
त्यस्मै ततः सारथिरभ्युवाच ॥ ३२ ॥

चलितः कंपितः । कंपनहेतुमाह एष दोषः जरारूपः ममापि भविता । सुगममन्यत् ॥ ३२ ॥

आयुष्मतोऽप्येष वयोऽपकर्षो । निःसंशयं कालवशेन भावी ॥
एवं जरां रूपविनाशयित्रीं । जानाति चैवेच्छति चैष लोकः ॥ ३३ ॥

आयुष्मतः भवतः । 'आयुष्मन् रथिनं सूतः' इति दर्पणे । वयसा हेतुना अपकर्षः अपकृष्टत्वं । वयःप्रकर्ष इति पाठे वयआधिक्यं वृद्धत्वमिति यावत् । कालवशेन कालाधीनत्वेन । इच्छति बहुकालजीवनेच्छया एव जरेच्छेतिभावः । बहुकालजीवनेन जराप्राप्तेः । स्फुटमन्यत् ॥ ३३ ॥

ततः स पूर्वाशयशुद्धबुद्धिर्विस्तीर्णकल्पाचितपुण्यकर्मा ॥
श्रुत्वा जरामुद्विविजे महात्मा । महाशनेर्घोषमिवांतिके गौः ॥ ३४ ॥

पूर्वाशयः पूर्वसंस्कारः । आशय शब्दस्य संस्कारवाचित्वं 'क्लेशकर्मविपाकाशयै-रित्यादियोगसूत्रे स्पष्टम् । विस्तीर्णा विशाला ये कल्पाः तेषु आचितानि संचितानि पुण्यकर्माणि येन । उद्विविजे उद्विग्नोऽभूत् । संविविजे इति पाठे स एवार्थः । अंतिके महाशनेर्घोषं श्रुत्वा गौरिवेत्यर्थः ॥ ३४ ॥

निःश्वस्य दीर्घं सशिरःप्रकंपं । तस्मिंश्च जीर्णे विनिवेश्य चक्षुः ॥
तां चैव दृष्ट्वा जनतां सहर्षां । वाक्यं स संविग्नमिदं जगाद ॥ ३५ ॥

जीर्णे वृद्धे । जनतां जनसमूहम् । सशिरःप्रकंपं इति निःश्वसनक्रियाविशेषणम् । सप्तम्यंतपाठे जीर्णे इत्यस्य विशेषणम् । संविग्नं उद्वेगसहितम् ॥ ३५ ॥

एवं जरा हन्ति च निर्विशेषं । स्मृतिं च रूपं च पराक्रमं च ॥
न चैव चोद्वेगमुपैति लोकः । प्रत्यक्षतोऽपीदृशमीक्षमाणः ॥ ३६ ॥

निर्विशेषं सर्वसाधारणमित्यर्थः । ईदृशं जराकर्तृकस्मृत्यादिनाशम् ॥ ३६ ॥

एवं गते सूत निवर्तयाश्वान् । शीघ्रं गृहाण्येव भवान्प्रयातु ॥
उद्यानभूमौ हि कुतो रतिर्मे । जराभये चेतसि वर्तमाने ॥ ३७ ॥

---

१ O वयःप्रकर्षो॰— २ C प्रकंप्य. ३ C संवेग.

एवं गते एवं सति। सर्वानपि जरा अवश्यं पीडयति चेत् इत्यर्थः। रतिः प्रेम। चेतसि अंतःकरणे। जरामये जरारूपसंसारे वर्तमाने सतीत्यर्थः ॥ ३७ ॥

**अथाज्ञया भर्तृसुतस्य तस्य। निवर्तयामास रथं नियंता॥**
**ततः कुमारो भवनं तदेव। चिंतावशः शून्यमिव प्रपेदे ॥ ३८॥**

भर्तृसुतस्य शुद्धोदनपुत्रस्य। नियंता सारथिः। तदेव यस्मिन् पूर्वं क्रीडति स्म तदेव। शून्यमिवेति गृहस्य सकलादीःसंपन्नत्वेपि मनसः उद्विग्नत्वेन शून्यसदृशत्वम् ॥ ३८ ॥

**यदा तु तत्रैव न शर्म लेभे। जरा जरेति प्रपरीक्षमाणः॥**
**ततो नरेन्द्रानुमतः स भूयः। क्रमेण तेनैव बहिर्जगाम ॥ ३९ ॥**

तत्रैव पूर्वगृहे एव। शर्म सुखं सुखालभ्यौ हेतुमाह जराजरेत्यादि। प्रपरीक्षमाणः चिन्तयन्नित्यर्थः। नरेन्द्रानुमतः शुद्धोदनेनाज्ञप्तः। तेनैव क्रमेण पूर्वगमनक्रमेणेत्यर्थः ॥ ३९ ॥

**अथापरं व्याधिपरीतदेहं। त एव देवाः ससृजुर्मनुष्यम्॥**
**दृष्ट्वा च तं सारथिमाबभाषे। शौद्धोदनिस्तद्गतदृष्टिरेव ॥ ४० ॥**

व्याधिपरीतदेहं व्याधिव्याप्तदेहं। त एव यैः पूर्वं जीर्णमनुष्यः प्रेषितः त एवेत्यर्थः। शौद्धोदनिः सर्वार्थसिद्धः। तस्मिन् व्याधिग्रस्ते मनुष्ये गता दृष्टिः यस्य सः। सुगममन्यत् ॥ ४० ॥

**स्थूलोदरः श्वासचलच्छरीरः। स्रस्तांसबाहुः कृशपाण्डुगात्रः॥**
**अंबेति वाचं करुणं ब्रुवाणः। परं समाश्लिष्य नरः क एषः॥४१॥**

किमाबभाषे तदाह—स्थूलोदरः बृहदुदरः। श्वासेन चलत् कंपितं शरीरं यस्य। स्रस्तौ अधोवलंबिनौ अंसौ बाहू च यस्य। कृशं पांडु च पांडुरं गात्रं शरीरं यस्य। अंब इत्यादिः लोकोक्तिरियम् ॥ ४१ ॥

**ततोऽब्रवीत्सारथिरस्य सौम्य। धातुप्रकोपप्रभवः प्रवृद्धः॥**
**रोगाभिधानः सुमहाननर्थः। शक्रोऽपि येनैष कृतोऽस्वतंत्रः॥४२॥**

धातूनां वातपित्तकफानां यः प्रकोपः अव्यवस्थितत्वं तस्मात् प्रभवः उत्पत्तिः यस्य। रोग इति अभिधानं नाम यस्य। येन रोगाभिधमहाऽनर्थेन। अस्वतंत्रः परतंत्र इत्यर्थः ॥ ४२ ॥

**इत्यूचिवान् राजसुतः स भूयस्तं सानुकंपं नरमीक्षमाणः॥**
**अस्यैव जातः पृथगेष दोषः। सामान्यतो रोगभयं प्रजानाम्॥४३॥**

राजसुतः सः तं नरं सानुकंपं ईक्षमाणः सन् भूयः इति वक्ष्यमाणप्रकारेण

१ C तो. १ C ०पो.

अचिंतयान् । किमुचिवान् तदाह—एष दोषः रोगरूपः अस्यैव पृथक् जातः किम् । अथवा प्रजानां सामान्यतः रोगभयम् ॥ ४३ ॥

ततो बभाषे स रथप्रणेता । कुमार साधारण एष दोषः ॥
एवं हि रोगैः परिपीड्यमानो । रुजातुरो हर्षमुपैति लोकः ॥ ४४ ॥

रथप्रणेता सारथिः । कुमार एष दोषः साधारणः सर्वसामान्य इत्यर्थः । रुजया रोगेण आतुरः । रोगव्याप्तोऽपि हर्षं आनंदं प्राप्नोति न तु विरज्यते इति तात्पर्यम् ॥ ४४ ॥

इति श्रुतार्थः स विषण्णचेताः ।
प्रावेपताम्बूर्मिगतः शशीव ॥
इदं तु वाक्यं करुणान्वितः सन् ।
प्रोवाच किंचिन्मृदुना स्वरेण ॥ ४५ ॥

श्रुतार्थः आकर्णितार्थः । विषण्णचेता उद्विग्नमनाः । अम्बूर्मयः उदककल्लोलाः तान् गतः प्रतिबिंबित इत्यर्थः शशी इव प्रावेपत प्राकंपत । इदं वक्ष्यमाणवाक्यम् । किंचित् मृदुना स्वरेण प्रोवाच ॥ ४५ ॥

इदं च रोगव्यसनं प्रजानां । पश्यंश्च विश्रंभमुपैति लोकः ॥
विस्तीर्णविज्ञानमहो नराणां । हसन्ति ये रोगभयैरमुक्ताः ॥ ४६ ॥

रोगव्यसनं रोगजदुःखं । विश्रंभे विश्वासे । मुक्तौ स्यां न कदाचित् दुःखं प्राप्नुयां इति विश्वासम् । यत् रोगभयैः अमुक्ताः अविमुक्ताः सन्तः हसंति अतः नराणां विस्तीर्णविज्ञानं महत् ज्ञानं । अहो इति आश्चर्ये । उपहासपरमिदं भाषणम् ॥ ४६ ॥

निवर्त्यतां सूत बहिः प्रयाणान्नरेन्द्रसद्मैव रथः प्रयातु ॥
श्रुत्वा च मे रोगभयं रतिभ्यः । प्रत्याहतं संकुचतीव चेतः ॥ ४७ ॥

रतिभ्यः विषयसुखेभ्यः प्रत्याहृतं निवृत्तं संकुचतीव संकोचं प्राप्नोतीवेत्यर्थः ॥ ४७ ॥

ततो निवृत्तः स निवृत्तहर्षः । प्रध्यानयुक्तः प्रविवेश सद्म ॥
तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं । पुर्यागमं भूमिपतिश्चकार ॥ ४८ ॥

निवृत्तहर्षः निर्गताऽऽनंदः प्रध्यानयुक्तः विचारमग्नमना इत्यर्थः । द्विः द्विवारं । पुर्यां आगमं प्राप्ति । निवर्तनकारणं द्रष्टुं पुरी आगत इत्यर्थः ॥ ४८ ॥

श्रुत्वा निमित्तं तु निवर्तनस्य । संत्यक्तमात्मानमनेन मेने ॥
मार्गस्य शौचाधिकृताय चैव । चुक्रोश रुष्टोऽपि च नोग्रदण्डः ॥ ४९ ॥

---

१ O. प. १ दे रोग॰—

निवर्तनस्य निमित्तं श्रुत्वा लोकेभ्य इति शेषः । अनेन पुत्रेण आत्मानं संत्यक्तं उज्झितं मेने । असितमुनिवाक्यस्मरणेन अयं मत्पुत्रः विरागी सन् आत्मानं त्यक्तवान् इति मेने इत्यर्थः । मार्गस्य अध्वनः । शौचाधिकृताय संकरनिरसनमार्जनादिना शुचित्वोत्पादने नियुक्ताय । चुक्रोश आक्रोशमेव कृतवान् । उग्रदण्डः तीक्ष्णदण्डः नो बभूवेत्यर्थः । रुष्टोपि वाचैव निर्भर्त्सितवान् न तूग्रदण्डं कृतवानित्यर्थः । एतेन तस्य दयालुता व्यज्यते ॥ ४९ ॥

**भूयश्च तस्मै विदधे सुताय ।**
**विशेषयुक्तं विषयप्रकारम् ॥**
**चलेन्द्रियत्वादपि नातिशक्तो ।**
**नास्मान्विजह्यादिति नाथमानः ॥ ५० ॥**

तस्मै सुताय विशेषयुक्तं आधिक्ययुक्तं विषयप्रकारं विषयरचनां भूयः पुनः विदधे । ननु विरक्तस्य पुत्रस्य भूयो विषयोपचारेण क उपयोग इत्यत आह— चलेन्द्रियत्वात् इत्यादि । चलेन्द्रियत्वात् इन्द्रियचाचल्यात् । अपिः संभावनायाम् । इंद्रियचांचल्यहेतोः विषयास्त्यक्तुं न अतिशक्नुयात् अपि । अतः अस्मान् न विजह्यात् न त्यजेत् इति *नाथमानः आशंसमान इत्यर्थः। भूयः विषयप्रकारं विदधे* इति पूर्वेण अन्वयः ॥ ५० ॥

**यदा च शब्दादिभिरिन्द्रियार्थैरन्तःपुरे नैव सुतोऽस्य रेमे ॥**
**तदा बहिर्व्यादिशति स्म यात्रां। रसांतरं स्यादिति मन्यमानः॥५१॥**

इन्द्रियार्थैः *विषयैः । व्यादिशति स्म आज्ञापितवान् । रसांतरं गृहक्रीडापेक्षया* बहिः क्रीडारूपं रसांतरमित्यर्थः ॥ ५१ ॥

**स्नेहाच्च भावं तनयस्य बुध्वा ।**
**संवेगदोषानविचिन्त्य कांश्चित् ॥**
**योग्याः समाज्ञापयति स्म तत्र ।**
**कलास्वभिज्ञा इति वारमुख्याः ॥ ५२ ॥**

तनयस्य भावं अभिप्रायं विरक्तिमित्यर्थः बुध्वा ज्ञात्वा कांश्चित् संवेगदोषान् उद्वेगदोषान् उद्वेगकारणीभूतहेतूनित्यर्थः । अविचिन्त्य अविगणय्य तिरस्कृत्येति यावत् । स्नेहात् पुत्रप्रेमवशात् तत्र कलासु वशीकरणकलासु अभिज्ञाः इति हेतोः योग्याः वारमुख्याः वारवेश्या इत्यर्थः समाज्ञापयति स्म ॥ ५२ ॥

**ततो विशेषेण नरेन्द्रमार्गे ।**
**स्वलंकृते चैव परीक्षिते च ॥**
**भृत्यास्य सूतं च रथं च राजा ।**
**प्रस्थापयामास बहिः कुमारम् ॥ ५३ ॥**

१ C नार्थे. २ C ब्धि. ३ C प्रया—

विशेषेण पूर्वापेक्षया आधिक्येन परीक्षिते कृतपरीक्षे। जीर्णलक्षणादिभिः वर्जिते इत्यर्थः। स्वलंकृते ध्वजतोरणपुष्पमालाभिः स्वर्चिते नरेन्द्रमार्गे राजमार्गे राजा शुद्धोदनः सूतं रथं च बहिः अस्यास्य बहिरानयेत्यर्थः कुमारं प्रस्थापयामास॥५३॥

ततस्तथागच्छति राजपुत्रे ।
तैरेव देवैर्विहितो गतासुः ॥
तं चैव मार्गे मृतमुह्यमानम् ।
सूतः कुमारश्च ददर्श नान्यः ॥ ५४ ॥

तथा पुनरपि विशिष्टसामर्थ्यसाहित्येन । तैरेव देवैः यैः पूर्वं वृद्धरुग्णौ प्रेषितौ तैरेवेत्यर्थः । विहितः कृतः । गतासुः गतप्राणः । उह्यमानं नीयमानम् । अन्यः सूतकुमाराभ्यां इतरः ॥ ५४ ॥

अथाब्रवीद्राजसुतः स सूतम् । नरैश्चतुर्भिर्ह्रियते क एषः ॥
दीनैर्मनुष्यैरनुगम्यमानो । यो भूषितोऽश्वास्यवरुध्यते च ॥५५॥

अथ स राजसुतः सूतं अब्रवीत्। तदेवाह—चतुर्भिर्नरैः ह्रियते एषः । कः तं वर्णयति दीनैरित्यादिना । भूषितः अलंकृतः । अश्वासी श्वासरहितः । अवरुध्यते प्रेतयाने इति शेषः ॥ ५५ ॥

ततः स शुद्धात्मभिरेव देवैः । शुद्धाधिवासैरभिभूतचेताः ॥
अवाच्यमप्यर्थमिमं नियन्ता । प्रव्याजहारार्थविदीश्वराय ॥५६॥

शुद्धात्मभिः शुद्धांतःकरणैः शुद्धे पवित्रे स्वर्गे अधिवासो येषां। अभिभूतचेताः पराभूतांतःकरणः भिन्नमनिरिति अवाच्यमपि । अवाच्यत्वं वैराग्योत्पादनेन राज्यभ्रंशकरत्वात् । इमं वक्ष्यमाणं अर्थं ईश्वराय शौद्धोदनये ॥ ५६ ॥

बुद्धीन्द्रियप्राणगुणैर्वियुक्तः ।
सुप्तो विसंज्ञस्तृणकाष्ठभूतः ॥
संवर्ध्य संरक्ष्य च यत्नवद्भिः ।
प्रियाप्रियैस्त्यज्यत एष कोऽपि ॥ ५७ ॥

बुद्धिः मतिः इन्द्रियाणि चक्षुरादीनि प्राणाः असवः गुणाः वैदुष्यादयः तैः वियुक्तः विरहितः अत एव तृणकाष्ठभूतः तृणकाष्ठतुल्यः सुप्तः दीर्घनिद्रां प्राप्त इत्यर्थः। अत एव विसंज्ञः संज्ञारहितः एतादृशः एष कोपि मनुष्यः यत्नवद्भिः प्रयत्नवद्भिः प्रियाऽप्रियैः हिताहितैः संवर्ध्य संनद्ध संरक्ष्य कव्यादेभ्यः रक्षणं कृत्वा त्यज्यते स्मशाने इति शेषः ॥ ५७ ॥

इति प्रणेतुः स निशम्य वाक्यम्। संचुक्षुभे किंचिदुवाच चैनम॥
एकाकिनस्यैव जनस्य नाशः। सर्वप्रजानामयमीदृशोऽन्तः॥५८॥

१ C रथ॰— २ C ईचु॰— ३ C किं केतस्मै.

प्रणेतुः सूतस्य । सः शौद्धोदनिः शुश्रुभे एनं सूतं किंचिदुवाच च । तदेवाह-किमित्यादिना केवलस्य एकस्य अंतः नाशः ॥ ५८ ॥

ततः प्रणेता वदति स्म तस्मै ।
सर्वप्रजानामयमन्तकर्ता ॥
हीनस्य मध्यस्य महात्मनो वा ।
सर्वस्य लोके नियतो विनाशः ॥ ५९ ॥

प्रणेता सूतः । अयं बुद्धिस्थः मृत्युः इत्यर्थः । अंतकर्ता । अन्तकर्मेति पाठे अंतः नाशकरणं कर्म क्रिया यस्य । तदेव द्रढयति । हीनस्येति हीनस्य निकृष्टस्य ॥ ५९ ॥

ततः स धीरोऽपि नरेन्द्रसूनुः । श्रुत्वैव मृत्युं विषसाद सद्यः ॥
अंसेन संश्लिष्य च कूबराग्रं । प्रोवाच निह्रादवता स्वरेण ॥ ६० ॥

धीरोऽपि गंभीरोऽपि विषसाद विषण्णोऽभूत् । संश्लिष्य अवष्टभ्य कूबराग्रं युगंधराग्रं निह्रादवता गांभीर्यवता ॥ ६० ॥

इयं च निष्ठा नियतं प्रजानाम् ।
प्रमाद्यति त्यक्तभयश्च लोकः ॥
मनांसि शंके कठिनानि नृणां ।
स्वस्थास्तथा ह्यध्वनि वर्तमानाः ॥ ६१ ॥

निष्ठा स्थिति । त्यक्तभयः मरणसंबंधिभीतिरहित इत्यर्थः । लोके नृणां मनांसि कठिनानि कठोराणि । कुत इत्याकांक्षायामाह—तथाहि स्वस्था अध्वनि वर्तमानाः भवन्तीति शेषः ॥ ६१ ॥

तस्माद्रथं सूत निवर्त्यतां नो । विहारयोग्यौ न हि देशकालौ ॥
जानन्विनाशं कथमार्तिकाले । सचेतनः स्यादिह हि प्रमत्तः ॥ ६२ ॥

देशकालौ नहि अयं देशः कालश्च विहारयोग्यो नास्तीत्यर्थ । तदेव स्पष्टयति । जानन्निति । आर्तिकाले दुःखकाले । सचेतनः ज्ञानी ॥ ६२ ॥

इति ब्रुवाणेऽपि नराधिपात्मजे ।
निवर्तयामास स नैव तं रथम् ॥
विशेषयुक्तं तु नरेन्द्रशासना-
त्सपद्मखण्डं वनमेव निर्ययौ ॥ ६३ ॥

विशेषयुक्तं विशेषशोभायुक्तमित्यर्थ । सपद्मखण्डं पद्मखण्डेन कमलसमूहेन सहितम् ॥ ६३ ॥

ततः शिवं कुसुमितबालपादपं ।
परिभ्रमत्प्रमुदितमत्तकोकिलम् ॥

---

१ C क्लो. २ C भूयो for श्रोत्वे ३ C प्रमत्तः.

निपानवत्सकमलचारुदीर्घिकं ।
दृदर्श तद्वनमिव नन्दनं वनम् ॥ ६४ ॥

शिवं सुखकरम् । कुसुमितबालपादपं प्रफुल्लितस्वल्पवृक्षम् । परिभ्रमन्तः प्रमुदिताः आनन्दिताः मत्ताः उन्मत्ताः कोकिलाः पिका यस्मिन् । निपानवत् आहावविशिष्टं । सकमलाः कमलसंहिताः । चार्व्यः मनोहराः दीर्घिकाः वाप्यः यस्मिन् । एतादृशं नंदनं वनमिव तद्वनं ददर्श ॥ ६४ ॥

वरांगनागणकलिलं नृपात्मज-
स्ततो बलाद्वनमभिनीयते स्म तत् ॥
वराप्सरोन्वितमलकाधिपालयम् ।
नवव्रतो मुनिरिव विघ्नकातरः ॥ ६५ ॥

वरांगनागणः सुंदरस्त्रीसमूहः तेन कलिलं व्याप्तम् । अभिनीयते स्म प्रापितः । बलात् हठात् । वराप्सरोऽन्वितं सुंदराप्सरोयुतं । अलकाऽधिपालयं कुबेरगृहं नवव्रतः नूतनव्रतधारी । विघ्नकातरः विघ्नत्रस्तः ॥ ६५ ॥

## इति उद्वेगोत्पत्तिर्नाम तृतीयः सर्गः

इति श्री ५ पदवाक्यप्रमाणपारावारीणमहामहोपाध्यायश्रीगोपालचार्यतिवासिना निगुडकरोपनामकनारायण( दत्तात्रेय )शर्मणा विरचितायां तत्त्वदीपिकाख्यायां बुद्धचरितसंक्षिप्तव्याख्यायां तृतीयः सर्गः ॥

---

# चतुर्थः सर्गः ।

ततस्तस्मात्पुरोद्यानात्कौतूहलचलेक्षणाः ।
प्रत्युज्जग्मुर्नृपसुतं प्राप्तं वरमिव स्त्रियः ॥ १ ॥

ततः शौद्धोदनेः उद्यानप्राप्त्यनंतरं । कौतूहलेन चले चंचले ईक्षणे नेत्रे यासां ताः । वरो हि प्रत्युद्गमनेन सत्कर्तव्यः इति शास्त्रम् ॥ १ ॥

अभिगम्य च तास्तस्मै । विस्मयोत्फुल्ललोचनाः ॥
चक्रिरे समुदाचारं पद्मकोशनिभैः करैः ॥ २ ॥

अभिगम्येति । विस्मयेन सौंदर्यादिदर्शनजन्याश्चर्येण उत्फुल्लानि विकसितानि लोचनानि नेत्राणि यासां ताः । 'प्रफुल्लोत्फुल्लसंफुल्ल' इत्यमरः । एतादृशः सत्यः-

१ C वि for नि. २ दीर्घकि.

अभिगम्य अभिमुखं गत्वा तस्मै शौद्धोदनये पद्मकोशनिभैः कमलकुड्मलसदृशैः करैः समुदाचारं आशीर्वादलाजप्रक्षेपादिकुलपरंपराप्राप्तस्त्रीकर्तृकसदाचारं चक्रिरे कृतवत्यः। तस्मै संप्रदाने चतुर्थी ॥ २ ॥

**तस्थुश्च परिवार्यैनं मन्मथाक्षिप्तचेतसः।**
**निश्चलैः प्रीतिविकचैः पिबन्त्य इव लोचनैः ॥ ३ ॥**

तस्थुरिति। मन्मथेन मदनेन आक्षिप्तं व्याप्तं इति यावत् चेतः यासां एतादृश्यः एनं परिवार्य परितः स्थित्वा प्रीत्या प्रेम्णा विकचैः विकसितैः निश्चलैः लोचनैः पिबन्त्य इव तस्थुः। अनेन तस्य स्त्रीमनोहारित्वं द्योत्यते ॥ ३ ॥

**तं हि ता मेनिरे नार्यः। कामो विग्रहवानिति ॥**
**शोभितं लक्षणैर्दीप्तैः सहजैर्भूषणैरिव ॥ ४ ॥**

तं परिवार्य उत्कंठ्यावलोकने बीजमाह—तमिति। हि यस्मात् ता नार्यः स्त्रियः तं शौद्धोदनिं विग्रहवान् देहवान् काम इति मदन इति सहजैः स्वाभाविकैः दीप्तैः प्रकाशमानैः लक्षणैः भाग्यचिह्नैः भूषणैरिव अलंकारैरिव शोभितं तं। विग्रहवान् काम इति पूर्वेण अन्वयः। मेनिरे ॥ ४ ॥

**सौम्यत्वाच्चैव धैर्याच्च। काश्चिदेनं प्रजज्ञिरे ॥**
**अवतीर्णो महीं साक्षात्। सुधांशुश्चंद्रमा इव ॥ ५ ॥**

सौम्यत्वेति। काश्चित् स्त्रियः सौम्यत्वात् शांतत्वात् धैर्यात् गांभीर्यात् च महीं अवतीर्ण- प्राप्त- साक्षात् प्रत्यक्षं सुधा अमृतं अंशव- यस्य एतादृश- चन्द्रमा इव विधुरिव एनं प्रजज्ञिरे। अत्रात्मनेपदं चिन्त्यम् ॥ ५ ॥

**तस्य ता वपुषाक्षिप्ता। निग्रहीतुं जजृंभिरे ॥**
**अन्योन्यं दृष्टिभिर्गत्वा। शनैश्च विनिशश्वसुः ॥ ६ ॥**

तस्येति। तस्य शौद्धोदनेः वपुषा शरीरेण आक्षिप्ता- आकृष्टाः तद्वपुःसौंदर्यदर्शनेन तद्गतचित्ता इत्यर्थः। निग्रहीतुं निग्रहं कर्तुं जजृंभिरे उत्कंठिताः अन्योन्यं परस्परं दृष्टिभिः गत्वा प्राप्य साक्षात् प्राप्तेरभावात् दृष्टिभिरेव अवलोक्येत्यर्थः। शनैः विनिशश्वसुः निश्वासं त्यक्तवत्यः। साक्षात् तत्प्राप्तेरभावादिति भाव-। श्वस् प्राणने लिट् ॥ ६ ॥

**एवं ता दृष्टिमात्रेण। नार्यो ददृशुरेव तम् ॥**
**न व्याजह्रुर्न जहसुः प्रभावेणास्य यंत्रिताः ॥ ७ ॥**

विनिश्वासकारणं स्पष्टयति। एवमिति। ता नार्यः तं दृष्टिमात्रेण ददृशुरेव न तु प्रापुरित्यर्थः। अस्य प्रभावेण यन्त्रिताः सन्त्यः न व्याजह्रुः न भाषितवत्यः न जहसुः न हसितवत्यः ॥ ७ ॥

तास्तथा तु निरारंभा दृष्ट्वा प्रणयविक्लवाः ॥
पुरोहितसुतो धीमानुदार्यो वाक्यमब्रवीत् ॥ ८ ॥

ता इति । ताः स्त्रियः तथा पूर्वोक्तप्रकारेण प्रणयेण प्रेम्णा विक्लवाः विह्वलाः एतादृशीरपि निर्गतः आरंभः तन्मनोहरणार्थं कटाक्षप्रेक्षणरूपः याभ्यः । दृष्ट्वा धीमान् । प्रसंगकुशल इति यावत् । उदार्यनामकः पुरोहितसुतः वाक्यं वक्ष्यमाणलक्षणमब्रवीत् ॥ ८ ॥

सर्वाः सर्वकलाज्ञाः स्थ । भावग्रहणपण्डिताः ॥
रूपचातुर्यसंपन्नाः स्वगुणैर्मुख्यतां गताः ॥ ९ ॥
शोभयन्त्यो गुणैरेभिरासन्तामुत्तरान्कुरून् ।
कुबेरस्यापि चाक्रीडं किं पुनर्वसुधामिमाम् ॥ १० ॥

तदेवाह—सर्वा इति । सर्वाः यूयमित्यर्थः सर्वकला जानन्तीति तथा स्थ भवथ । इदं क्रियापदं प्रतिवाक्यमन्वेति । भावस्य अभिप्रायस्य ग्रहणं ज्ञानं ज्ञापनं वा तद्विषये पण्डिताः कुशला इति यावत् । रूपेण सौंदर्येण चातुर्येण च संपन्ना दक्षाः स्वगुणैः पुरुषमनोहारित्वादिभिः मुख्यतां प्रधानत्वं सर्वस्त्रीषु इत्यर्थः गताः प्राप्ताः ॥ ९ ॥ १० ॥

शक्ताश्चालयितुं यूयं । वीतरागानृषीनपि ॥
अप्सरोभिश्च कलितान् । ग्रहीतुं विबुधानपि ॥ ११ ॥

शक्ता इति । वीतरागान् गतविषयकप्रेम्णोऽपि । चालयितुं स्वशीलान् भ्रंशयितुम् । अप्सरोभिः कलितान् युक्तान् विबुधानपि देवानपि ग्रहीतुं आकष्टुं शक्ताः । अनेन अप्सरोपेक्षयापि कौशलं दर्शितम् ॥ ११ ॥

भावज्ञानेन हावेन । चातुर्याद्रूपसंपदा ॥
स्त्रीणामपि च शक्ताः स्थ । संरागे किं पुनर्नृणाम् ॥ १२ ॥

भावस्य मानसिकविकारस्य रत्यादेः ज्ञानेन हावेन रत्यादिभ्यः जाताः स्त्रीणां विलासादिका हावशब्दवाच्याः । तेन । चातुर्यात् दक्षतया रूपसंपदा सौंदर्यसंपत्त्या । स्त्रीणामपि संरागे प्रेम्णि मनोहरणे इत्यर्थः समर्थाः । नृणां पुरुषाणां किं पुनर्वक्तव्यम् ॥ १२ ॥

कुतस्त्वेवंविधानां वो नियुक्तानां स्वगोचरे ॥
इयमेतादृशी चेष्टा न तुष्टोस्म्यार्जवेन वः ॥ १३ ॥

कुत इति एवंविधानां । दुर्घटमपि कर्तुं शक्तानामित्यर्थः । स्वगोचरे स्वविषये राजपुत्रमनोहरणे इत्यर्थः । नियुक्तानां नियन्त्रितानाम् । इयं एतादृशी पूर्वोक्तप्रकारा चेष्टा व्यापारः तूष्णींभवनमित्यर्थः कुतः अस्तीति शेषः । वः युष्माकं आर्जवेन ऋजुस्वभावेन न तुष्टोऽस्मि न प्रीतोस्मीत्यर्थः । एतन्मनोहरणे यतध्वमिति तात्पर्यम् ॥ १३ ॥

१ D ०भिरवितान्. २ C मेत्र.

इदं नववधूनां वो । ह्रीनिकुंचितचक्षुषाम् ॥
सदृशं चेष्टितं हि स्यादपि वा गोपयोषिताम् ॥ १४ ॥

ऋजुत्वमेवाह—इदमिति । नूतनस्त्रीणां अत एव ह्रीनिकुंचितचक्षुषां लज्जया संकुचितनेत्राणां वः युष्माकं चेष्टितं आचरणं सदृशं हि गोपयोषितां । अपि वा गोपस्त्रीणामित्यर्थः । गोपस्त्रीणां विलासायज्ञानात् युष्माकं तु ज्ञानेऽपि लज्जावत्त्वात् समानमाचरितमित्यर्थः ॥ १४ ॥

यद्यपि स्यादयं वीरः । श्रीप्रभावान्महानिति ॥
स्त्रीणामपि महत्तेज इति कार्योऽत्र निश्चयः ॥ १५ ॥

ननु सत्यमेवं स्त्रीणां स्वभावः तथापि महावीरे अस्मिन् अस्माकं प्रयत्नो व्यर्थ एव भवेत् इत्याशङ्क्याह—यद्यपीति । यद्यपि अयं श्रीप्रभावात् महान् इति स्यात् तथापि स्त्रीणामपि तेजो महत् वर्तते इति निश्चयः कार्यः ॥ १५ ॥

पुरा हि काशिसुंदर्या[1] । वेशवध्वा महानृषिः ॥
ताडितोऽभूत् पदन्यासाद्दुर्धर्षो दैवतैरपि ॥ १६ ॥

तदेव दृष्टांतं स्पष्टयति । पुरेति । हि पुरा काशीराजस्य स्त्रिया वेशवध्वा वेश्यया दैवतैरपि दुर्धर्षः पदन्यासात् ताडित अभूत् ॥ १६ ॥

*मंथालगौतमो भिक्षुर्जंघया बालमुख्यया ॥
पिप्रीषुश्च तदर्थार्थं । व्यसूनिरहरत् पुरा ॥ १७ ॥
गौतमं दीर्घतपसं । महर्षिं दीर्घजीवनम् ॥
योषित् संतोषयामास । वर्णस्थानावरा सती ॥ १८ ॥

ऋष्यशृंगं मुनिसुतं । तथैव स्त्रीष्वपण्डितम् ॥
उपायैर्विविधैः शांता जग्राह च जहार च ॥ १९ ॥

ऋष्यशृङ्गमिति । तथैव पूर्वोक्तवदेव शांता एतन्नाम्नी राजकन्या स्त्रीषु अपण्डितं शृङ्गाररसानभिज्ञमित्यर्थः । मुनिसुतं विभाण्डकसुतं ऋष्यशृङ्गं विविधैः उपायैः चारवेश्याप्रेषणाद्युपायैः जहार । तदाश्रमात् हरति स्म । जग्राह परिणिनाय ॥ १९ ॥

विश्वामित्रो महर्षिश्च विगाढोऽपि महत्तपः ॥
दशवर्षाण्यरण्यस्थो घृताच्याप्सरसा हृतः ॥ २० ॥

महत्तपः विगाढः प्रविष्टः कुर्वाण इत्यर्थः दशवर्षाणि इदं असंख्यवर्षाणामुपलक्षणं अरण्यस्थः वनवासी । अनेन महासामर्थ्यमुक्तं । एतादृशः विश्वामित्रनामकः ऋषिरपि घृताच्या एतन्नामकाप्सरसा हृतः स्वाधीनः कृत इत्यर्थः ॥ २० ॥

---

[1] J पुरा काशीसुंदर्या.

* Stanzas 17 and 18 have been taken from the Oxford edition.

अथ नारीजनवृतः कुमारो व्यचरद्वनम् ॥
वासितायूथसहितः करीव हिमवद्वनम् ॥ २७ ॥

अथेति । वासितायूथसहितः करिणीसमूहसहितः करी हिमवद्वनमिव स्त्रीसमूहवृतः कुमारः वनं व्यचरत् ॥ २७ ॥

स तस्मिन्कानने रम्ये जज्वाल स्त्रीपुरःसरः॥
आक्रीड इव वभ्राजे मरुत्वानप्सरोवृतः ॥ २८ ॥

स इति । स्त्रीपुरःसरः स्त्रीणामग्रेसरः । आक्रीडे उद्याने अप्सरोवृतः मरुत्वानिव इंद्र इव बभ्राजे रराज ॥ २८ ॥

मदेनावर्जिता नाम तं काश्चित्तत्र योषितः ॥
कठिनैः पस्पृशुः पीनैः संघट्टैर्वल्गुभिः स्तनैः ॥ २९ ॥

मदेनेति । मदेन यौवनगर्वेण आवर्जिताः युक्ताः काश्चित् योषितः स्त्रियः तं पीनैः पुष्टैः ॥ २९ ॥

स्रस्तांसकोमलालम्बमृदुबाहुलतावला ॥
अनृतं स्खलितं काचित्कृत्वैनं सस्वजे बलात् ॥ ३० ॥

स्रस्तांस इति । काचित् अवला स्रस्तौ अंसौ यस्याः अत एव कोमलः आलम्बः आश्रयो यस्याः एतादृशी मृद्वी बाहुलता यस्याः एतादृशी सती अनृतं मिथ्या स्खलितं कृत्वा एनं शौद्धोदनिं बलात् सस्वजे आलिलिंग ॥ ३० ॥

काचित्ताम्राधरोष्ठेन मुखेनासवगंधिना ॥
विनिशश्वास कर्णेऽस्य रहस्यं श्रूयतामिति ॥ ३१ ॥

काचिदिति । ताम्रः अधरोष्ठ यस्य तेन । आसवस्य मैरेयस्य गंधः लेशः यस्य तत् आसवगंधि 'अल्पाख्यायां' इकारः समासांतः । तेन मुखेन रहसि एकांते भवं रहस्यं गुप्तं भाषणं श्रूयतां आकर्ण्यतां । श्रुधातोः कर्मणि लोट् । इति एवं प्रकारेण अस्य कर्णे विनिशश्वास श्वसिति स्म ॥ ३१ ॥

काचिदाज्ञापयंतीव प्रोवाचार्द्रानुलेपना ॥
इह भक्तिं कुरुष्वेति हस्तं संश्लिष्य लिप्सया ॥ ३२ ॥
मुहुर्मुहुर्मदव्याजस्रस्तनीलांशुकापरा ॥
आलक्ष्यरसना रेजे स्फुरद्विद्युदिव क्षपा ॥ ३३ ॥

काचिदिति । आर्द्रं सार्द्रं अनुलेपं अंगरागो यस्याः एतादृशी काचित् आज्ञापयंतीव बोधयंतीव हस्तं संश्लिष्य संबध्य प्रोवाच ॥ ३२ ॥ ३३ ॥

काश्चित्कनककांचीभिर्मुखराभिरितस्ततः ॥
बभ्रमुर्दर्शयंत्योऽस्य श्रोण्यः सूक्ष्मांशुकावृताः ॥ ३४ ॥

१ C निशश्वास॰ १ C श्रोणीर्नन्वंशु॰.

काश्चिदिति। अस्य शौद्धोदनेः तनुना अल्पेन मृदुलेनेति यावत् अंशुकेन आवृताः वेष्टिताः श्रोणीः कटीः दर्शयन्त्यः काश्चिन् स्त्रियः इतस्ततो बभ्रमुः ॥३४॥

**चूतशाखां कुसुमितां प्रगृह्यान्या ललम्बिरे ॥**
**सुवर्णकलशप्रख्यान् दर्शयन्त्यः पयोधरान् ॥ ३५ ॥**

चूतशाखामिति। कुसुमानि पुष्पाणि संजातानि यस्यां सा। तारकादित्वादितच्। चूतशाखां आम्रशिफां प्रगृह्य सुवर्णकलशान् प्रचक्षते तिरस्कुर्वंति इति तथा। धातूनामनेकार्थत्वात् अतोऽनुपसर्गे इति क प्रत्ययः। तान् पयोधरान्। गंगाधरादिवद् अच् प्रत्ययः।स्तनान् दर्शयंत्यः अन्याः काश्चिन् ललम्बिरे आश्रितवत्यः॥३५॥

**काचित्पद्मवनादेत्य सपद्मा पद्मलोचना ॥**
**पद्मवक्त्रस्य पार्श्वेऽस्य पद्मश्रीरिव तस्थुषी ॥ ३६ ॥**

काचित् इति। पद्मवनात् पद्मसमूहात् कमलाकरादिति यावत् सपद्मा पद्महस्तेति यावत् पद्मलोचना कमलनेत्रा काचिदेत्य पद्मवक्त्रस्य कमलमुखस्य अस्य शौद्धोदनेः पार्श्वभागे पद्मश्रीरिव कमलस्थलक्ष्मीरिवेत्यर्थः। तस्थुषी स्थितवती ॥३६॥

**मधुरं गीतमन्वर्थं काचित्साभिनयं जगौ ॥**
**तं स्वस्थं प्रेरयन्तीव वंचितोऽसीत्यवेक्षितैः ॥ ३७ ॥**

मधुरमिति। स्वस्थं शृङ्गाराऽप्रवृत्तं ते अवेक्षितैः अवलोकनैः वंचितोऽसि प्रलंभितोसि इति प्रेरयंतीव चोदयंतीव काचित् मधुरं अन्वर्थं अर्थानुगतं साभिनयं अभिनयसहितं गीतं जगौ ॥ ३७ ॥

**प्रफुल्लवदनेनान्या भ्रूकार्मुकविकर्षिणा ॥**
**प्रवृत्यानुचकारास्य चेष्टितं वीरलीलया ॥ ३८ ॥**

शुभेनेति। अन्या स्त्री शुभेन सुंदरेण भ्रुवावेव कार्मुके धनुषी ते विकर्षति तच्छीलं तेन वदनेन प्रारब्ध्य प्रवृत्तिं कृत्वा अस्य चेष्टितं वीरलीलया अनुचकार ॥ ३८ ॥

**पीनवल्गुस्तनी काचिद्वातालाघूर्णकुंडला ॥**
**उच्चैरवजहासैनं समाप्नोतु भवानिति ॥ ३९ ॥**

पीनेति। पीनौ पुष्टौ वल्गू सुंदरौ स्तनौ यस्याः स्वांगाच्चोपसर्जनादितिङीप्। वातेन आघूर्णिते भ्रमिते कुंडले कर्णभूषणे यस्याः एतादृशी काचिन् भवान् समाप्नोतु संप्राप्नोतु इति एनं उच्चैः अवजहास ॥ ३९ ॥

**अपयान्तं तथैवान्या बबंधुर्माल्यदामभिः॥**
**काश्चित्साक्षेपमधुरैर्जगृहुर्वचनांकुशैः ॥ ४० ॥**

१ J सेदुषी. २ C चोदयन्तीव. ३ C शुभेन for प्रफुल्ल. ४ C •विनताघूर्णित कुं•. ५ J •र्ण for •र्.

25239.

अपेति। तथैव पूर्ववदेव अपयांतं अपगच्छंतं अन्याः माल्यदामभिः बबंधुः। काश्चित् आक्षेपेण आशयविशेषेण मधुरैः साशयैरित्यर्थः वचनान्येव अंकुशाः सृणयः तैः जगृहुः। चाटु वाक्यानि उच्चारयामासुरित्यर्थः ॥ ४० ॥

प्रतियोगार्थिनी काचिद्गृहीत्वा चूतवल्लरीम् ॥
इदमस्त्रं तु कस्येति पप्रच्छ मदविक्लवा ॥ ४१ ॥

प्रतियोगेति। प्रतियोगः संबंधः स एवार्थो अस्याः तेन सह रंतुं इच्छन्तीत्यर्थः मदेन विक्लवा विह्वला काचित् चूतवल्लरी गृहीत्वा इदं पुष्पं तु कस्येति पप्रच्छ ॥ ४१ ॥

काचित्पुरुषवत्कृत्वा गतिं संस्थानमेव च ॥
उवाचैनं जितः स्त्रीभिर्जय भोः पृथिवीमिमाम् ॥ ४२ ॥

काचित् पुरुषवत् गतिं गमनं संस्थानं संस्थितिं कृत्वा पुरुषवत् गत्वा पुरुषवत् स्थित्वेत्यर्थः। भोः स्त्रीभिः जितः त्वं इमां पृथिवीं जय इति एनं उवाच ॥ ४२ ॥

अथ लोलेक्षणा काचिज्जिघ्रंती नीलमुत्पलम् ॥
किंचिन्मदकलैर्वाक्यैर्नृपात्मजमभाषत ॥ ४३ ॥

अथेति। लोलेक्षणा चंचलनेत्रा नीलं उत्पलं कमलं जिघ्रन्ती काचित् मदकलैः वाक्यैः नृपात्मजं किंचित् अभाषत ॥ ४३ ॥

पश्य भर्तश्चितं चूतं कुसुमैर्मधुगंधिभिः ॥
हेमपंजररुद्धो वा कोकिलो यत्र कूजति ॥ ४४ ॥

अभाषतेत्युक्तं तदाह—पश्येति। हे भर्तः मधुनः गंधो लेशो येषां तानि। समासांत इकारः। तैः कुसुमैः पुष्पैः चितं व्याप्तं चूतं आम्रं पश्य। यत्र हेमपंजररुद्ध इव कोकिलः पिकः कूजति अव्यक्तशब्दं करोति। 'वास्याद्विकल्पोपमयो' इति मेदिनी ॥ ४४ ॥

अशोको दृश्यतामेष कामिशोकविवर्धनः ॥
रुवंति भ्रमरा यत्र दह्यमाना इवाग्निना ॥ ४५ ॥

अशोकेति। कामिनां कामुकानां शोकविवर्धनः एषः पुरोवर्ती अशोकः वंजुलः दृश्यतां अवलोक्यतां। यत्र अशोके भ्रमराः भृंगाः अग्निना दह्यमाना इव रुवंति। अशोकपुष्पाणां ताम्रवर्णत्वात् अग्नितुल्यत्वम् ॥ ४५ ॥

चूतयष्ट्या समाश्लिष्टो दृश्यतां तिलकद्रुमः ॥
शुक्लवासा इव नरः स्त्रिया पीतांगरागया ॥ ४६ ॥

चूतेति। शुक्लवासाः नरः पीतांगरागया स्त्रिया इव चूतयष्ट्या आम्रयष्ट्या समाश्लिष्टः तिलकद्रुमः दृश्यताम् ॥ ४६ ॥

---

१ C ११ पुष्पैः. २ J मा for भोः.

फुल्लं कुरवकं पश्य निर्मुक्तालक्तकप्रभम् ॥
यो नखप्रभया स्त्रीणां निर्भर्त्सित इवानतः ॥ ४७ ॥

फुल्लमिति । यः स्त्रीणां नखप्रभया नखरकांत्या निर्भर्त्सितः तिरस्कृतः अत एव आनत इव नम्र इव अस्तीति शेषः एतादृशं निर्मुक्तः बहिर्निस्सृतः अलक्तक इव प्रभा यस्य तं फुल्लं कुरवकं पश्य ॥ ४७ ॥

बालाशोकश्च निचितो दृश्यतामेष पल्लवैः ॥
योऽस्माकं हस्तशोभाभिर्लज्जमान इव स्थितः ॥ ४८ ॥

बालेति । यः अस्माकं हस्तशोभाभिः लज्जमान इव स्थितः हस्तानां आरक्तत्वादेवमुक्तिः । सः पल्लवैः निचितः व्याप्तः एषः बालाशोकः दृश्यताम् ॥ ४८ ॥

दीर्घिकां प्रावृतां पश्य तीरजैः सिंदुवारकैः ॥
पांडुरांशुकसंवीतां शयानां प्रमदामिव ॥ ४९ ॥

दीर्घिकामिति । तीरजैः तीरस्थितैः सिंदुवारकैः निर्गुंडीवृक्षैः प्रावृतां वेष्टितां दीर्घिकां वापीं पाण्डुरेण शुभ्रेण अंशुकेन वस्त्रेण संवीतां वेष्टितां शयानां प्रमदामिव स्त्रियमिव पश्य ॥ ४९ ॥

दृश्यतां स्त्रीषु माहात्म्यं चक्रवाको ह्यसौ जले ॥
पृष्ठतः प्रेष्यवद्भार्यामनुवृत्यानुगच्छति ॥ ५० ॥

दृश्यतामिति । स्त्रीषु माहात्म्यं महत्वं दृश्यतां । हि यतः असौ चक्रवाकः कोकः जले उदके प्रेष्यवत् भृत्यवत् भार्यां स्त्रियं अनुवृत्य अनुवर्तनं कृत्वा पृष्ठतः अनुगच्छति पश्चाद्गच्छति । पुरुषा अपि एवं सेवंते इदमेव स्त्रीषु माहात्म्यमित्यर्थः ॥ ५० ॥

मत्तस्य परपुष्टस्य रुवतः श्रूयतां ध्वनिः ॥
अपरः कोकिलोऽनुत्कः प्रतिश्रुत्येव कूजति ॥ ५१ ॥

मत्तेति । परपुष्टस्य परभृतः रुवतः शब्दं कुर्वाणस्य ध्वनिः श्रूयतां अनुत्कः अनुत्कंठितः अपरः अन्यः कोकिलः प्रतिश्रुत्येव प्रतिध्वनिनेव कूजति शब्दं करोति ॥ ५१ ॥

अपिनाम विहंगानां वसंतेनाहितो मदः ॥
न तु चिंतयतश्चित्तं[1] जनस्य प्राज्ञमानिनः ॥ ५२ ॥

अपीति । विहंगानां पक्षिणां चित्ते वसंतेन मदः आहितः अपिनाम आहितः किम् । प्राज्ञमानिनः आत्मानं प्राज्ञं मन्विनः चिंतयतः जनस्य मदन्-ध्यं[illegible] चित्ते अंतःकरणे न तु आहितः [illegible] ॥ ५२ ॥

१ C चित्तं.

**इत्येवं ता युवतयो मन्मथोद्दामचेतसः ॥**
**कुमारं विविधैस्तैस्तैरुपचक्रमिरे नयैः ॥ ५३ ॥**

स्त्रीणां भाषणमुपसंहरति—इत्येवमिति । इत्येवं पूर्वोक्तप्रकारेण मन्मथेन मदनेन उद्दामं उद्भूवं चेतः अंतःकरणं यासां ताः एतादृश्यः ताः युवतयः तैः तैः विविधैः नयैः कुमारं उपचक्रमिरे । अनुकूलयितुमिति शेषः ॥ ५३ ॥

**एवमाक्षिप्यमाणोऽपि स तु धैर्यावृतेन्द्रियः ॥**
**मर्तव्यमिति सोद्वेगो न जहर्ष न सिप्मिये ॥ ५४ ॥**

एवमिति । एवं आक्षिप्यमाणोऽपि तिरस्क्रियमाणोपीत्यर्थः धैर्येण आवृतानि इंद्रियाणि येन एतादृशः स तु मर्तव्यं इति हेतोः सोद्वेगः न जहर्ष न ननंद । न सिप्मिये न हसितवान् ॥ ५४ ॥

**तासां तत्त्वेऽनवस्थानं दृष्ट्वा स पुरुषोत्तमः ॥**
**समंविग्नेन धीरेण चिंतयामास चेतसा ॥ ५५ ॥**

तासामिति । पुरुषोत्तमः पुरुषश्रेष्ठः सः शौद्धोदनिः तासां तत्त्वे अनवस्थानं अनवस्थितिं दृष्ट्वा स संविग्नेन अपि धीरेण गंभीरेण चेतसा चिंतयामास ॥५५॥

**किंवेमा नावगच्छन्ति चपलं यौवनं स्त्रियः ॥**
**यतो रूपेण संपन्नं जरेयं नाशयिष्यति ॥ ५६ ॥**

चिंतामेवाह--किमिति । इमाः स्त्रियः यौवनं तारुण्यं चपलं अस्थिरं इति नावगच्छन्ति किं वा न जानन्ति किम् । कुतोऽयं तर्क इत्यत आह—यतः कारणात् रूपेण सौंदर्येण संपन्नं युक्तं अर्थाच्छरीरं इयं जरा नाशयिष्यति । अवश्यंभावित्वात् जरायां सन्निकृष्टत्वमारोप्य इयमिति निर्देशः ॥ ५६ ॥

**नूनमेता न पश्यन्ति कस्यचिद्रोगसंप्लवम् ॥**
**तथा हृष्टा भयं त्यक्त्वा जगति व्याधिधर्मिणि ॥ ५७ ॥**

नूनमिति । एताः कस्यचित् कस्यापीत्यर्थः । रोगेण ज्वरादिना संप्लवः नाशः तं नूनं न पश्यंति । कुत इति चेत्तत्राह—तथेति व्याधिधर्मिणि व्याधयः धर्माः स्वभावा यस्य 'धर्मादनिच् केवलात्' इति समासांतोऽनिच् प्रत्ययः । एतादृशे जगति भयं व्याध्यादिभयं त्यक्त्वा हृष्टाः वर्तन्ते इति शेषः ॥ ५७ ॥

**अनभिज्ञाश्च सुव्यक्तं मृत्योः सर्वापहारिणः ॥**
**तथा स्वस्था निरुद्वेगाः क्रीडन्ति च हसन्ति च ॥ ५८ ॥**

अनभिज्ञा इति । सर्वापहारिणः सर्वापहरणशीलस्य मृत्योः अंतकस्य अनभिज्ञाः अज्ञाः इति सुव्यक्तं स्पष्टमेवेत्यर्थः कुत इति चेत् तत्राह—तथामृत्युज्ञान

१ C सिप्मिये. २ C तत्त्वेन स्थानं. ३ K. विना मात०.

रहितवत् स्वस्थाः मनश्चांचल्यरहिताः निरुद्वेगाः उद्वेगरहिताः क्रीडन्ति च हसन्ति च । मृत्युज्ञाने इदमसंभवीति भावः ॥ ५८ ॥

जरां मृत्युं च रोगं च कोहि जानन् सचेतनः
स्वस्थस्तिष्ठेन्निषीदेद्वा स्वप्याद्वा किं पुनर्हसेन् ॥ ५९ ॥

उक्तं विचार्य उपहसति—जरामिति । सचेतनः सज्ञानः । स्वप्स्यन्त् ॥५९॥

यस्तु दृष्ट्वा परं जीर्णं व्याधितं मृतमेव च ॥
स्वस्थो भवति नोद्विग्नो यथाऽचेतास्तथैव सः ॥ ६० ॥

यस्त्विति । जीर्णं वृद्धम् । अचेता अचेतनः ॥ ६० ॥

वियुज्यमानेऽपि तरौ पुष्पैरपि फलैरपि ॥
पतति च्छिद्यमाने वा तरुरन्यो न शोचते ॥ ६१ ॥

वियुज्येति । पुष्पैः फलैरपि वियुज्यमानेऽपि तरौ वृक्षे पतिते छिद्यमाने सति अन्यः तरुः न शोचते । तद्वत् देहात्मनो स्थितिरित्यर्थः ॥ ६१ ॥

इति ध्यानपरं दृष्ट्वा विषयेभ्यो गतस्पृहम् ॥
उदायी नीतिशास्त्रज्ञस्तमुवाच सुहृत्तया ॥ ६२ ॥

उदायी पुरोहितपुत्रः । सुहृत्तया मित्रत्वेन ॥ ६२ ॥

अहं नृपतिना दत्तः सखा तुभ्यं क्षमः किल ॥
तस्मात्त्वयि विवक्षा मे तया प्रणयवत्तया ॥ ६३ ॥

नृपतिना तुभ्यं अहं क्षमः हितः सखा दत्तः तस्मात् त्वयि त्वद्विषये प्रणयवत्तया प्रेम्णा मे विवक्षा वक्तुमिच्छा ॥ ६३ ॥

अहितात् प्रतिषेधश्च हिते चाप्यनुप्रवर्तनम् ॥
व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणम् ॥ ६४ ॥

क्षम शब्दस्य हितत्वं उक्तं तत्र हितं भेदमाह—अहितात् इति । अहितात् प्रतिषेधः हिते हिताचरणे अनुप्रवर्तनं व्यसने दुःखे च परित्यागः एतत्त्रिः विधा प्रकारो यस्य मित्रेण एतत्क्रियात्रयं विधेयमित्यर्थः ॥ ६४ ॥

सोऽहं मैत्रीं प्रतिज्ञाय पुरुषार्थात्पराङ्मुखम् ॥
यदि त्वां समुपेक्षेयं न भवेन्मित्रता मयि ॥ ६५ ॥

सोऽहमिति । सोऽहं मित्रभूतोऽहं मैत्रीं मित्रतां प्रतिज्ञाय ऊरीकृत्येत्यर्थः पुरुषार्थान् कामरूपतृतीयपुरुषार्थात् पराङ्मुखं विमुखं त्वां यदि समुपेक्षेयं तर्हि मयि मित्रता न भवेत् ॥ ६५ ॥

तद्ब्रवीमि सुहृद्भूत्वा तरुणस्य वपुष्मतः ॥
इदं न प्रतिरूपन्ते स्त्रीष्वदाक्षिण्यमीदृशम् ॥ ६६ ॥

१ J है for ह. २ C दत्ता०. ३ C ०क्षेयं.

तदिति । तत् तस्मात् कारणात् सुहृद्भूत्वा मित्रीभूय वपुष्मतः उत्तमशरीरस्य तरुणस्य ते तव अदाक्षिण्यं अनुकूलवर्तित्वाभावः स्त्रीषु प्रतिरूपं योग्यं न ॥६६॥

अनृतेनापि नारीणां युक्तं समनुवर्तनम् ॥
तद्व्रीडापरिहारार्थमात्मरत्यर्थमेव च ॥ ६७ ॥

स्त्रीषु दाक्षिण्यं अननुरूपमित्युक्तमत आह—अनृतेनापीति । तासां व्रीडा लज्जा तस्याः परिहारार्थं आत्मरत्यर्थं स्वरत्यर्थं च नारीणां अनृतेनापि समनुवर्तनं सम्यगनुकूलनं युक्तं योग्यमित्यर्थः ॥ ६७ ॥

सन्नतिश्चानुवृत्तिश्च स्त्रीणां हृदयबन्धनम् ॥
स्नेहस्य हि गुणा योनिर्मानकामाश्च योषितः ॥ ६८ ॥

सन्नतिरिति । सन्नतिः नम्रता अनुवृत्तिः अनुकूलता इत्येतद्द्वयं स्त्रीणां हृदयबंधनं हृदयाकर्षकमित्यर्थः । हि यस्मात् कारणात् गुणाः मानादयः स्नेहस्य प्रेम्णः योनिः कारणं योषितः स्त्रियः मानकामाः सत्कारकामुकाः अतः स्त्रीणामनुकूलं युक्तमित्यर्थः ॥ ६८ ॥

तदर्हसि विशालाक्ष हृदयेऽपि पराङ्मुखे ॥
रूपस्यास्यानुरूपेण दाक्षिण्येनानुवर्तितुम् ॥ ६९ ॥

उक्तं निगमयति तदिति । तत् स्त्रीणामनुवर्तनस्य युक्तत्वात् हृदये अंतःकरणे पराङ्मुखेऽपि विमुखेऽपि अर्थात् स्त्रीणामित्यर्थः अस्य रूपस्य सौंदर्यस्य अनुकूलत्वे न स्थातुं अर्हसि ॥ ६९ ॥

दाक्षिण्यमौषधं स्त्रीणां दाक्षिण्यं भूषणं परम् ॥
दाक्षिण्यरहितं रूपं निष्पुष्पमिव काननम् ॥ ७० ॥

दाक्षिण्यमिति । स्पष्टार्थः ॥ ७० ॥

किंवा दाक्षिण्यमात्रेण भावेनास्तु परिग्रहः ॥
विषयान् दुर्लभाँल्लब्ध्वा न ह्यवज्ञातुमर्हसि ॥ ७१ ॥

न केवलं दाक्षिण्यमेवोपयुक्तं किंतु अभिप्रायोऽप्युपयुज्यते इत्याह—किंवेति दाक्षिण्यमात्रेण केवलदाक्षिण्येनेत्यर्थः किंवा को वा उपयोग इत्यर्थः भावेन अभिप्रायविशेषेण परिग्रहः स्वीकृतिः अर्थात् स्त्रीणां तदेवाह विषयानिति स्पष्टमेतत् ॥ ७१ ॥

कामं परमिति ज्ञात्वा देवोऽपि हि पुरंदरः ॥
गौतमस्य मुनेः पत्नीमहल्यां चकमे पुरा ॥ ७२ ॥

काममिति । कामं मदनं परं श्रेष्ठं अन्यत् स्पष्टम् ॥ ७२ ॥

अगस्त्यः प्रार्थयामास सोमभार्यां च रोहिणीम् ॥
तस्मात्तत्सदृशीं लेभे लोपामुद्रामिति श्रुतिः ॥ ७३ ॥

अगस्त्य इति । तत्सदृशं रोहिणीसदृशीं लोपामुद्रां एतन्नामिकां स्त्रियम् । इयं कथा पुराणांतरे गवेषणीया ॥ ७३ ॥

**उतथ्यस्य च भार्यायां ममतायां महातपाः ॥**
**मारुत्यां जनयामास भरद्वाजं बृहस्पतिः ॥ ७४ ॥**

उतथ्यस्येति । मारुत्यां वायुपुत्र्यां ममतायां एतन्नामिकायां । अन्यत् स्पष्टम् । इयं कथा श्रीमद्भागवते नवमस्कंधे ॥ ७४ ॥

**बृहस्पतेर्महिष्यां च तारायां कामुको वरः ॥**
**बुधं विबुधधर्माणं जनयामास चंद्रमाः ॥ ७५ ॥**

बृहस्पतेरिति । वरः श्रेष्ठः कामुकः अभिलापुकः चंद्रमाः विबुधानां पण्डितानां धर्माः यस्मिन् विद्वद्धर्माणमित्यर्थः देवधर्माणामिति वा । इयमपि कथा नवमस्कंधे ॥ ७५ ॥

**कालीं चैव पुरा कन्यां जलप्रभवसंभवाम् ॥**
**जगाम यमुनातीरे जातरागः पराशरः ॥ ७६ ॥**

कालीमिति । पुरा पूर्वं जलप्रभवो मत्स्यः तस्मात् संभवो यस्याः सा कालीं कृष्णवर्णां अर्थात् सत्यवतीं यमुनातीरे कालिंदीतीरे जातरागः उत्पन्नानुरागः पराशरः ऋषिविशेषः जगाम संगतवान् इत्यर्थः । इयं कथा देवीभागवते भारतादौ च ॥ ७६ ॥

**मातंग्यामक्षमालायां गर्हितायां रिरंसया ॥**
**कपिंजलादं तनयं वसिष्ठोऽजनयन्मुनिः ॥ ७७ ॥**

मातंग्यामिति । मातंग्यां मातंगकन्यायां अक्षमालानाम्न्यां गर्हितायां निंद्यायां रिरंसया रंतुं इच्छया कपिं जलादं एतन्नामानम् । इयं कथा पुराणांतरे द्रष्टव्या ॥ ७७ ॥

**ययातिश्चैव राजर्षिर्वयस्यपि विनिर्गते ॥**
**विश्वाच्याप्सरसा सार्धं रेमे चैत्ररथे वने ॥ ७८ ॥**

ययातिरिति । ययातिः एतन्नामकः वयसि विनिर्गतेपि वृद्धत्वेपीत्यर्थः विश्वाच्या एतन्नाम्न्या । चैत्ररथे एतन्नामके कुबेरोद्याने ॥ ७८ ॥

**स्त्रीसंसर्गे विनाशांतं पांडुर्ज्ञात्वापि कौरवः ॥**
**माद्रीरूपगुणाक्षिप्तः सिषेवे कामजं सुखम् ॥ ७९ ॥**

स्त्रीसंसेति । कौरवः कुरुकुलोत्पन्नः पांडुः स्त्रीसंसर्गे स्त्रीसंबंधे विनाशः अंते अवसाने यस्य एतादृशं ज्ञात्वापि माद्याः रूपगुणैः आक्षिप्तः सन् कामजं सुखं सिषेवे । इयं कथा भारते आदिपर्वणि द्रष्टव्या ॥ ७९ ॥

---

१ C ओ for उ. २ C जुहुत्यां जुहुतां वरः.

करालजनकश्चैव हृत्वा ब्राह्मणकन्यकाम् ॥
अवाप भ्रंशमप्येव न तु तत्याज मन्मथम् ॥ ८० ॥

करालेति । इयमपि कथा पुराणांतरे गवेषणीया ॥ ८० ॥

एवमाद्या महात्मानो विषयान् गर्हितानपि ॥
रतिहेतोर्बुभुजिरे प्रागेव गुणसंहितान् ॥ ८१ ॥

एवमिति । एवं आद्याः मुख्याः येषां ते तथा रतिहेतोः रत्यर्थं प्रागेव सेवनात्पूर्वमेव गुणसंहितान् गुणयुक्तान् अथौत् परिणामदुष्टान् इत्यर्थः ॥ ८१ ॥

तं पुनर्न्यायतः प्राप्तान् बलवान् रूपवान् युवा ॥
विषयानवजानासि यत्र सक्तमिदं जगत् ॥ ८२ ॥

उक्तदृष्टांतेभ्यः त्वयि वैलक्षण्यमित्याह—त्वमिति । न्यायतः नीत्या प्राप्तान् आगतान् । अवजानासि तिरस्करोषि यत्र येषु विषयेषु इदं जगत् सक्तं तान् न्यायतः इत्यादि संबंधः इदं विशेषयोतकेन पुनरित्यनेन सूच्यते ॥ ८२ ॥

इति श्रुत्वा वचस्तस्य श्लक्ष्णमागमसंहितम् ॥
मेघस्तनितनिर्घोषः कुमारः प्रत्यभाषत ॥ ८३ ॥

इतीति । श्लक्ष्णं मृदु आगमाः प्रमाणानि तैः संहितं युक्तं सप्रमाणमित्यर्थः ॥ ८३ ॥

उपपन्नमिदं वाक्यं सौहार्दव्यंजकं त्वयि ॥
अत्र च त्वानुनेष्यामि यत्र मा दुष्टु मन्यसे ॥ ८४ ॥

उपपन्नमिति । सुहृदो भावः सौहार्दं मैत्री तद्व्यंजकं सूचकं यत्र येषु विषयेषु मा दुष्टु मन्यसे विषयरमणं समीचीनं मन्यसे इत्यर्थः मा शब्दो निषेधार्थः अत्र एतद्विषये त्वां अनुनेष्यामि सांत्वयामि ॥ ८४ ॥

नावजानामि विषयान् जाने लोकं तदात्मकम् ॥
अनित्यं तु जगन्मत्वा नात्र मे रमते मनः ॥ ८५ ॥

नेति । विषयान् नावजानामि न तिरस्करोमि लोकं तदात्मकं विषयाभिलाषुकमित्यर्थः किमर्थं तर्हि विषयांस्तिरस्करोषि अत आह अनित्यमित्यादिना । जगतः अनित्यत्वादेव न तत्र रतिः न त्वज्ञानादिति तात्पर्यम् ॥ ८५ ॥

जरा व्याधिश्च मृत्युश्च यदि न स्यादिदं त्रयम् ॥
ममापि हि मनोज्ञेषु विषयेषु रतिर्भवेत् ॥ ८६ ॥

जरेति । स्पष्टार्थः ॥ ८६ ॥

नित्यं यद्यपि हि स्त्रीणामेतदेव वपुर्भवेत् ॥
दत्तंपितरस्य कामेषु तथापि न रतिः क्षमा ॥ ८७ ॥

१ U स्त्रोत्र स०.

नित्यमिति । स्त्रीणां यद्यपि एतद्वपुः नित्यं भवेत् तथापि ससंवित्कस्य प्रेक्षावतः पुरुषस्य । 'प्रेक्षोपलब्धिः श्रीं संवित्' इत्यमरः । कामेषु विषयेषु रतिः प्रेमा क्षमा योग्या न भवेत् ॥ ८७ ॥

**यदा तु जरया पीतं रूपमासां भविष्यति ॥**
**आत्मनोऽप्यनभिप्रेतं मोहात्तत्र रतिर्भवेत् ॥ ८८ ॥**

न रतिः क्षमा इत्युक्तं तत्र हेतुमाह—यदेति । आसां रूपं जरया अपीतं युक्तमित्यर्थः यदा भविष्यति । आत्मनः अपि स्वस्यापि अनभिप्रेतं अनिष्टं एवं सति तत्र रतिः रमणं मोहात् भवेत् ॥ ८८ ॥

**मृत्युव्याधिजराधर्मो मृत्युव्याधिजरात्मभिः ॥**
**रममाणोऽप्यसंविग्नः समानो मृगपक्षिभिः ॥ ८९ ॥**

मृत्यिति । मृत्युः मरणं व्याधिः ज्वरादिः जरा च धर्मा यस्य । अत्र 'धर्मादनिच् केवलात्' इत्यनिच् प्रत्ययो न केवलस्य पूर्वपदस्याभावात् । मृत्युव्याधिजरात्मभिः मृत्युव्याधिजरास्वभावाभिः अर्थात् स्त्रीभिः रममाणः अपि असंविग्नः अनुद्विग्नः पुरुषः मृगपक्षिभिः समानः पशुतुल्य इत्यर्थः ॥ ८९ ॥

**यद्यप्यात्थ महात्मानस्तेऽपि कामात्मका इति ॥**
**संवेगोऽत्र न कर्तव्यो यतस्तेषामपि क्षयः ॥ ९० ॥**

महात्मनां दृष्टांतीकरणमपि विफलमित्याह यदिति । ते महात्मानोपि कामात्मकाः इति यदपि आत्थ अत्र एतद्विषये संवेगः त्वरा महात्मानोपि स्त्रीणां अनुकूला आसन् इत्यविचाररूपत्वरेत्यर्थः न कर्तव्यः । कुत इत्यत आह—यत इति यतः यस्मात् तेषामपि महात्मनामपि क्षयः नाशः अस्ति ॥ ९० ॥

**माहात्म्यं न च तन्मध्ये यत्र सामान्यतः क्षयः ॥**
**विषयेषु प्रसक्तिर्वा युक्तिर्वा नैात्मवित्तया ॥ ९१ ॥**

माहात्म्यमिति । यत्र विषयेषु सामान्यतः साधारण्येन । सर्वसाधारणइत्यर्थः । क्षयः नाशः अस्ति तन्मध्ये विषयमध्ये माहात्म्यं श्रेष्ठत्वं नास्ति एतादृशेषु विषयेषु प्रसक्तिः आसक्तिः युक्तिः योगः संबंधः इत्युभयं नास्तीत्यर्थः । कुत इत्यपेक्षायामाह—आत्मवित्तयेति आत्मज्ञानवत्तया विषयवैमुख्यादिति भावः ॥ ९१ ॥

**यद्यप्यात्थानृतेनापि स्त्रीजने वर्ततामिति ॥**
**अनृतं नावगच्छामि दाक्षिण्येनापि किंचन ॥ ९२ ॥**

यद्यपीति । अनृतेनापि स्त्रीजने वर्ततामिति यद्यपि आत्थ तथापि दाक्षिण्येनापि किंचन अनृतं नावगच्छामि न जानामि ॥ ९२ ॥

१ J यद्यप्यादुर्म॰. २ C यदा ते॰.—३ C ॰स्तव॰.

न चानुवर्तनं तन्मे रुचितं यत्र नार्जवम् ॥
सर्वभावेन संपर्को यदि नास्ति धिगस्तु तत् ॥ ९३ ॥

अनृतं कथमपि न रोचते इत्याह—न चेति । यत्र आर्जवं ऋजुत्वं नास्ति एतादृशं अनुवर्तनं मे न रुचितं । तदेव द्रढयति । सर्वभावेन बाह्यांतररूपेण संपर्कः संबंधः यदि नास्ति तर्हि तत् दाक्षिण्यं धिक् यदि प्रेमचिकीर्षितं तर्हि अंतःकरणपूर्वकमेव नोचेद्व्यर्थमिति तात्पर्यम् ॥ ९३ ॥

अनृते श्रद्दधानस्य सक्तस्यादोषदर्शिनः ॥
किं हि वंचयितव्यं स्याज्जातरागस्य चेतसः ॥ ९४ ॥

अनृते श्रद्दधानस्य विश्वासं कुर्वतः सक्तस्य दोषान् न पश्यतः जातरागस्य उत्पन्नानुरागस्य चेतसः वंचयितव्यं प्रलब्धव्यं किं हि स्यात् यत्र प्रेम तत्र वंचनं अयुक्तमित्यर्थः । अतः अन्तःकरणपूर्वकमेव प्रेम कर्तव्यमिति तात्पर्यम् ॥ ९४ ॥

वंचयंति च यद्येवम् जातरागाः परस्परम् ॥
ननु नैव क्षमं द्रष्टुं नराः स्त्रीणां नृणां स्त्रियः ॥ ९५ ॥

वंचयंतीति । जातरागाः परस्परं यद्येवं वंचयंति तर्हि । ननु इति आमंत्रणे। अहो इत्यर्थः । नराः स्त्रीणां च स्त्रियः नृणां द्रष्टुं नैव क्षमम् ॥ ९५ ॥

तदेवं सति दुःखार्तं जरामरणभोगिनम् ॥
न मां कामेष्वनार्येषु प्रतारयितुमर्हसि ॥ ९६ ॥

उक्तं निगमयति—तदिति । तत् एवं सति दुःखेन आर्तं पीडितं जरामरणे भुनक्ति सः जरामरणभोगी तं मां अनार्येषु दुष्टेषु कामेषु प्रतारयितुं वंचयितुं न अर्हसि ॥ ९६ ॥

अहो सुधीरं बलवच्च ते मन-
श्चलेषु कामेषु च सारदर्शिनः ॥
भयेऽपि तीव्रे विषयेषु सज्जसे ।
निरीक्षमाणो मरणाध्वनि प्रजाः ॥ ९७ ॥

एवं सदुक्तीः संग्रह्य तं तिरस्करोति—अहो इति । चलेषु चंचलेषु कामेषु विषयेषु सारदर्शिनः सारमिति मन्यमानस्येत्यर्थः ते मनः बलवत् सुधीरं अहो इत्याश्चर्ये । मरणाध्वनि मरणमार्गे प्रजाः लोकान् निरीक्षमाणोऽपि तीव्रे भये मरणरूपेऽपि विषयेषु सज्जसे आसक्तो भवसि । अतः ते मनः सुधीरं इत्यादि पूर्वेणान्वयः ॥ ९७ ॥

१ C धैर. २ J क्षमा. ३ J स्वर्जितम् ४ C अतिरिक्षिते(.

अहं पुनर्भीरुरतीव विक्लवो
जराविपद्व्याधिभयं विचिंतयन् ॥
लभे न शांतिं न धृतिं कुतो रतिं
निशामयन् दीप्तमिवाग्निना जगत् ॥ ९८ ॥

स्वीयस्थितिं वर्णयति । पुनः वैलक्षण्यद्योतकः । त्वदपेक्षया मदीयास्थितिः विलक्षणा तदेवाह—अहमिति । जराविपद्व्याधिभयं विचिंतयन् अतएव अतीव विक्लवः भीरुः अहं अग्निना दीप्तं इव जगत् निशामयन् पश्यन् सन् शांतिं न लभे धृतिं धैर्यं न लभे कुतः रतिम् ॥ ९८ ॥

असंशयं मृत्युरिति प्रजानतो
नरस्य रागो हृदि यस्य जायते ॥
अयोमयीं तस्य परैमि चेतनां
महाभये हृष्यति[1] यो न[2] रोदिति ॥ ९९ ॥

असंशयं निःसंशयं मृत्युः वर्तते इति प्रजानतः यस्य नरस्य हृदि अंतःकरणे रागः प्रेमा जायते तस्य चेतनां अंतःकरणं अयोमयीं लोहमयीं इति परैमि जानामि । हि महाभये यः हृष्यति न रोदिति ॥ ९९ ॥

अथो कुमारश्च विनिश्चयात्मिकां
चकार कामाश्रयघातिनीं कथां ॥
जनस्य चक्षुर्गमनीयमंडलो
महीधरं चास्तमियाय भास्करः ॥ १०० ॥

अथो इति । कुमारः शौद्धोदनिः विनिश्चयात्मिकां कामाश्रयघातिनीं कथां चकार। जनस्य चक्षुषा गमनीयं प्रापणीयं दृश्यमिति यावत् एतादृशं मण्डलं यस्य स भास्करः सूर्यः अस्तं महीधरं अस्ताचलं इयाय जगाम ॥ १०० ॥

ततो वृथाधारितभूषणस्रजः कलागुणैश्च प्रणयैश्च निष्फलैः ॥
स्व एव भावे विनिगृह्य[3] मन्मथं पुरं ययुर्भग्नमनोरथाः स्त्रियः॥१०१॥

तत इति । ततः सूर्यास्तानंतरं वृथा शौद्धोदनेर्वशित्वाभावेन मुधा धारिताः भूषणस्रजः याभिः अतएव भग्नमनोरथाः स्त्रियः निष्फलैः प्रणयैः च कलागुणैः स्वे भावे एव स्वात्मन्येवेत्यर्थः मन्मथं मदनं विनिगृह्य प्रतिसंहृत्येत्यर्थः । पुरं ययुः ॥ १०१ ॥

ततः पुरोद्यानगतां जनश्रियं
निरीक्ष्य सायं प्रतिसंहृतां पुनः ॥

---

१ O हृष्यति. २ J यो न नरो न रोदिति. ३ O निगुह्य--

अनित्यतां सर्वगतां विचिंतयन्
विवेश धिष्ण्यं क्षितिपालकात्मजः ॥ १०२ ॥

ततः स्त्रीनगरप्राप्त्यनंतरं पुरोद्यानगतां नगराक्रीडस्थितामित्यर्थः । जनश्रियं लोकशोभां पुनः सायं प्रतिसंहृतां नष्टामित्यर्थः । निरीक्ष्य अवलोक्य अतएव सर्वगतां अनित्यतां विचिंतयन् क्षितिपालकात्मजः शौद्धोदनिः धिष्ण्यं स्थानं गृहं वा विवेश ॥ १०२ ॥

ततः श्रुत्वा राजा विषयविमुखं तस्य तु मनो
न शिश्ये तं रात्रौ हृदयगतशल्यो गज इव ॥
अथ श्रांतो मंत्रे बहुविविधमार्गैः ससचिवो
न सोऽन्यत्कामेभ्यो नियमनमपश्यत्सुतमतेः ॥ १०३ ॥

तत इति । ततः कुमारस्य गृहप्राप्त्यनंतरं राजा शुद्धोदनः तस्य कुमारस्य मनस्तु विषयविमुखं कामपराङ्मुखं श्रुत्वा हृदयगतशल्यः गज इव तद्रात्रौ न शिश्ये । अथ ससचिव- बहवः अनेके विविधाः अनेकप्रकाराः मार्गा अवांतरभेदा यस्य एतादृशे मंत्रे श्रांतः सन् सुतमते- नियमनं कामेभ्यः अन्यत् कामान् विहाय अन्यत् इत्यर्थ- । ल्यब्लोपे पंचमी । न अपश्यत् न ज्ञातवान् । कामा एव सुतमतेराकर्षका इति निश्चितवानित्यर्थ- ॥ १०३ ॥

---

## पञ्चमः सर्गः ।

स तथा विषयैर्विलोभ्यमानः
परमैरपि शाक्यराजसूनुः ॥
न जगाम रतिं न शर्म लेभे
हृदये सिंह इवातिदिग्धविद्धः ॥ १ ॥

पूर्वस्मिन् सर्गे कामैर्विना सुतमतिनियमनं न शक्यमित्युक्तं तमेव राजप्रयत्नं प्रथयन् शौद्धोदनेर्वृत्तमाह—सेति । स शाक्यराजसूनुः शौद्धोदनिः परमैः परेषां मोहजनकैरपि विषयैः तथा पूर्वोक्तप्रकारेण विलोभ्यमानोपि रतिं रागं न जगाम शर्मापि सुखमपि न लेभे हृदये दिग्धेन विषाक्तबाणेन विद्धः सिंह इव रतिमित्यादि पूर्वेणान्वयः ॥ १ ॥

अथ मंत्रिसुतैः क्षमैः कदाचित्
सखिभिश्चित्रकथैः कृतानुयात्रः ॥

१ ख शि. १ II इवातिदिग्धविद्धः.

वनभूमिदिदृक्षया शमेप्सु-
र्नरदेवानुमतो बहिः प्रतस्थे ॥ २ ॥

अथेति । अथ चित्तास्वास्थ्यानंतरं कदाचित् चित्राः मनोहराः कथा येषां तैः मनोहरभाषणशालिभिरित्यर्थः । क्षमैः हितैः । 'क्षमं शक्ते हिते त्रिषु' इत्यमरः । सखिभिः मित्रैः मंत्रिसुतैः प्रधानपुत्रैः । कृतानुयात्रः कृतानुगमनः शमेप्सुः शांत्यभिलाषुकः नरदेवेन पित्रा अनुमतः आज्ञप्तः वनभूमिदिदृक्षया अरण्यभूमिदर्शनेच्छया बहिः प्रतस्थे ॥ २ ॥

नवरुक्मखलीनकिंकिणीकं
प्रचलच्चामरचारुहेमभांडम् ॥
अभिरुह्य स कंठकं सदश्वं
प्रययौ केतुमिव द्रुमाब्जकेतुः ॥ ३ ॥

नवेति । नवाः रुक्मस्य खलीनकिंकिण्यो यस्य तं । प्रचलत् चंचलं यत् चामरं तेन चारु सुंदरं हेम्नः सुवर्णस्य भांडं अश्वालंकारविशेषो यस्य । "स्याद्भांडमश्वाभरणं" इत्यमरः । एतादृशं कंठकं एतन्नामानं सदश्वं सुंदराश्वं सः अभिरुह्य प्रययौ ॥ "केतुमिव द्रुमाब्जकेतुः" एतस्य अर्थो विचारणीयः ॥ ३ ॥

स निकृष्टतरां वनांतभूमिं
वनलोभाच्च ययौ महीगुणेच्छुः ॥
सलिलोर्मिविकारसीरमार्गां
वसुधां चैव ददर्श कृष्यमाणाम् ॥ ४ ॥

सेति । स वनलोभात् अरण्यदर्शनलोभात् निकृष्टतरां संनिकृष्टतरां वनांतभूमिं ययौ च । महीगुणेच्छुः महीगुणाः सहनशीलतादयः । तान् इच्छुः अथवा महीगुणाः पृथ्वीस्थलोकाना गुणाः तान् इच्छुः । सलिलस्य उदकस्य ऊर्मयः कल्लोलाः तासां विकारा येषु एतादृशाः सीरमार्गाः लांगलपद्धतयो यस्यां एतादृशीं कृष्यमाणां वसुधां ददर्श ॥ ४ ॥

हलभिन्नविकीर्णशष्पदर्भां
हतसूक्ष्मक्रिमिकीटजंतुकीर्णाम् ॥
समवेक्ष्य रसां तथाविधां तां
स्वजनस्येव वधे भृशं शुशोच ॥ ५ ॥

हलेति । हलेन भिन्ना अतएव विकीर्णाः शष्पाणि तृणानि दर्भाश्च यस्यां हताः ये सूक्ष्मक्रिमयः तेषां कीटेन समूहेन जंतुभिश्च कीर्णां व्याप्तां तथाविधां तां रसां भूमिं समवेक्ष्य स्वजनस्य वधे इव भृशं अत्यंतं शुशोच ॥ ५ ॥

---

१ II हंसमित्रात्मभूः स देवः. २ H ०शीत.

कृषतः पुरुषांश्च वीक्षमाणः
पवनार्कांशुरजोविभिन्नवर्णान् ॥
वहनक्रमविक्लवांश्च धुर्यान्
परमार्यः परमां कृपां चकार ॥ ६ ॥

कृषत इति। परमार्यः अत्यंतसज्जनः पवनः वायुः अर्कः सूर्यः रजः धुलिःएभिः विभिन्नः वर्णो येषां एतादृशः कृषतः पुरुषान् कर्षकान् तथैव वहनक्रमेण वहनश्रमेण विह्वलान् विह्वलान् धुर्यान् वृषभान् वीक्षमाणः सन् परमां अतिशयितां कृपां दयां चकार ॥ ६ ॥

अवतीर्य ततस्तुरंगपृष्ठाच्छनकैर्गां व्यचरच्छुचा परीतः ॥
जगतो जननव्ययौ विचिन्वन् कृपणं खल्विदमित्युवाच चार्तः ॥७॥

अवतीर्येति। ततः तुरंगस्य अश्वस्य पृष्ठात् अवतीर्य शनकैः गां भूमिं व्यचरत्। जगतः जननव्ययौ उत्पत्तिनाशौ विचिन्वन् विचारयन् शुचा शोकेन परीतः व्याप्तः सन् अतएव आर्तः पीडितः इदं वक्ष्यमाणं कृपणं यथास्यात्तथा उवाच ॥७॥

मनसा च विविक्ततामभीप्सुः
सुहृदस्ताननुयायिनो निवार्य ॥
अभितारलचारुपर्णवत्या
विजने मूलमुपेयिवान् स जंब्वाः ॥ ८ ॥

मनसेति। च मनसा विविक्ततां विजनतां अभीप्सुः प्राप्तुमिच्छुः सुहृदः तान् अनुयायिनः निवार्य निषिध्य तरलान्येव तारलानि अभितः तारलानि चंचलानि चारूणि एतादृशानि पर्णानि यस्याः सा तस्याः जंब्वाः मूलं विजने उपेयिवान् ॥८॥

निषसाद च पत्रसंघवत्यां
भुवि वैदूर्यनिकाशशाद्वलायाम् ॥
जगतः प्रभवव्ययौ विचिन्त्य
मनसश्च स्थितिमार्गमाललंबे ॥ ९ ॥

निषसादेति। पत्रसंघवत्यां वैदूर्येण निकाशः शाद्वलः शादहरितभागो यस्याः तस्यां भुवि निषसाद। जगतः प्रभवव्ययौ उत्पत्तिनाशौ विचिंत्य मनसः स्थितिमार्गं स्थैर्यमार्गं आललंबे ॥ ९ ॥

समवाप्तमनःस्थितिश्च सद्यो
विषयेच्छादिभिराधिभिश्च मुक्तः ॥
सवितर्कविचारमाप शांतं
प्रथमं ध्यानमनाश्रवप्रकारम् ॥ १० ॥

१ C ०नव्ययं वि०. २ C ०त्रमोत्त०— ३ H तारतलचारु० ४ H स्थितिमार्गमनसश्च.

समेति । सयः समवाप्तमनःस्थितिः प्राप्तमनःस्थैर्यः विषयेच्छादिभिः आधिभिः मनोव्यथाभिः मुक्तः आश्रवः पराधीनः तद्भिन्नः अनाश्रवः । स्वतंत्र इत्यर्थः स प्रकारो यस्य । वितर्कः विशेषतर्कः विचारः विवेकः तैः सहितं शांतं ध्यानं प्रथमं आप ॥ १० ॥

अधिगम्य ततो विवेकजं तु
परमप्रीतिसुखं तथा समाधिम् ॥
इममेव ततः परं प्रदध्यौ मनसा
लोकगतिं निशम्य सम्यक् ॥ ११ ॥

अधिगम्येति । ततः विवेकजं विवेकोत्पन्नं परमे प्रीतिसुखे प्रेमसुखे यस्मिन् । तं समाधिं अधिगम्य प्राप्य मनसा लोकगतिं लोकस्थितिं सम्यक् निशम्य विचार्य इमं एव परं श्रेष्ठं इति प्रदध्यौ ॥ ११ ॥

कृपणो बत यज्जनः स्वयं सन्नरसो व्याधिजराविनाशधर्मः ॥
जरयार्दितमातुरं मृतं वा परमज्ञो विजुगुप्सते मदांधः ॥ १२ ॥

कृपण इति । स्वयं कृपणः कुत्सितः । 'कृपणो मंदकुत्सितयोस्त्रिषु' इति मेदिनी । अरसः अगुणः व्याधिजराविनाशधर्मः जनः जरया अर्दितं आतुरं मृतं एतादृशं परं अन्यं विजुगुप्सते निन्दति इति यत् । बत आश्चर्ये । तत् आश्चर्यमित्यर्थः तत्र हेतुः अज्ञः मदांधश्च ॥ १२ ॥

इह चेदहमीदृशः स्वयं सन्
विजुगुप्सेय परं तथास्वभावम् ॥
न भवेत्सदृशं हि तत्क्षमं वा
परमं धर्ममिमं विजानतो मे ॥ १३ ॥

जनस्य पूर्वोक्तं अज्ञमदांधत्वं प्रगटयति—इहेति । इह अहं ईदृशः व्याधिजरायुक्तः स्वयं सन् तथा स्वभावं व्याधिजरास्वभावं परं अन्यं विजुगुप्सेय चेत् इमं परमं धर्मं विजानतः मे तत् परविजुगुप्सनं सदृशं योग्यं क्षमं हितं न भवेत् ॥ १३ ॥

इति तस्य विपश्यतो यथावज्जगतो व्याधिजराविपत्तिदोषान् ॥
बलयौवनजीवितप्रवृत्तौ विजगामात्मगतो मदः क्षणेन ॥ १४ ॥

इतीति । इति यथावत् जगतः व्याधिजराविपत्तिदोषान् विपश्यतः तस्य शौद्धोदनेः बलयौवनजीवितप्रवृत्तौ आत्मगतः मदः गर्वः क्षणेन क्षणमात्रकालेन विजगाम ॥ १४ ॥

---

१ J वे. २ C om: तथा. ३ C कृपणं. ४ H सन् । रमते. ५ H परमालोच्य जुगुप्सते न मंदः.

**न जहर्ष न चापि चानुतेपे विचिकित्सां न ययौ न तंद्रिनिद्रे ॥**
**न च कामगुणेषु संररंजे न च दिद्वेष परं न चावमेने ॥ १५ ॥**

मदापगमफलानि दर्शयति—न चेत्यादिना। न जहर्ष न च अनुतेपे। विचिकित्सां न संशयं न ययौ तंद्रिनिद्रे न ययौ कामगुणेषु न संररंजे परं न दिद्वेष च परं न अवमेने ॥ १५ ॥

**इति बुद्धिरियं च नीरजस्का ववृधे तस्य महात्मनो विशुद्धा ॥**
**पुरुषैरपरैरदृश्यमानः पुरुषश्चोपससर्प भिक्षुवेषः ॥ १६ ॥**

इतीति। इति तस्य महात्मनः शौद्धोदनेः इयं पूर्वोक्ता निर्गतं रजः रजोगुणो यस्याः सा नीरजस्का। इदमुपलक्षणं तमोगुणस्यापि। तेन केवलसत्वगुणा इत्यर्थः। अतएव विशुद्धा बुद्धिः ववृधे। अपरैः अन्यैः पुरुषैः अदृश्यमानः पुरुषः भिक्षुवेशः सन् उपससर्प समीपमाजगामेत्यर्थः ॥ १६ ॥

**नरदेवसुतस्तमभ्यपृच्छद्वद कोऽसीति शशंस सोथ तस्मै ॥**
**नृपपुंगव जन्ममृत्युभीतः श्रमणः प्रव्रजितोऽस्मि मोक्षहेतोः ॥१७॥**

नरदेवेति। नरदेवसुत शौद्धोदनिः। किं कथयामास तदाह-हे नृपपुंगव राजश्रेष्ठ जन्ममृत्युभीत. अहं मोक्षहेतो श्रमण भिक्षुकः प्रव्रजित: अस्मि ॥ १७ ॥

**जगति क्षयधर्मके मुमुक्षुर्मृगयेऽहं शिवमक्षयं पदं तत् ॥**
**अजनोऽन्यजनैरतुल्यबुद्धिर्विषयेभ्यो विनिवृत्तरागदोषः ॥१८॥**

स्वस्थितिं दर्शयति—जगति इति। क्षयधर्मके जगति मुमुक्षुः अहं अक्षयं शिवं कल्याणं तत् पदं मृगये। कथं भूतोऽहं अजन अनुत्पत्तिः जनरहितो वा अन्यजनैः अतुल्यबुद्धिः विषयेभ्यः विनिवृत्तरागदोष ॥ १८ ॥

**निवसन् क्वचिदेव वृक्षमूले**
**विजने वायतने गिरौ वने वा ॥**
**विचराम्यपरिग्रहो निराशः**
**परमार्थाय यथोपपन्नभिक्षुः ॥ १९ ॥**

निवसन्निति। परमार्थाय मोक्षाय यथावत् प्राप्त इत्यर्थः। स चासौ भिक्षुश्च ॥१९॥

**इति पश्यत एव राजसूनो-**
**रिदमुक्त्वा स नभः समुत्पपात ॥**
**स हि तद्वपुरन्यबुद्धिदर्शी**
**स्मृतये तस्य समेयिवान् दिवौकाः ॥ २० ॥**

इतीति। तद्वपु यस्य सः। अन्यबुद्धिदर्शी दिवौकाः सन् तस्य शौद्धोदनेः स्मृतये समेयिवान्। अन्यत् पूर्वार्धं स्पष्टार्थम् ॥ २० ॥

---

१ C न नृपुं०.— २ II वा भवने, ३ II क्षुः.

गगनं खगवद्गते च तस्मिन् नृवरः संजहृषे विसिस्मिये च ॥
उपलभ्य ततश्च धर्मसंज्ञामभिनिर्याणविधौ मतिं चकार ॥२१॥

गगनमिति। तस्मिन् खगवत् पक्षिवत् गगनं आकाशं गते सति नृवरः शौद्धोदनिः संजहृषे विसिस्मिये च। ततः धर्मसंज्ञां उपलभ्य अभिनिर्याणविधौ मतिं बुद्धिं चकार ॥ २१ ॥

तत इंद्रसमो जितेंद्रियश्च प्रविविक्षुः पुरमश्वमारुरोह ॥
परिवर्त्य जनं त्ववेक्षमाणस्तत एवाभिमतं वनं न भेजे ॥ २२ ॥

तत इति। पुरं प्रविविक्षुः प्रवेष्टुमिच्छुः जनं परिवर्त्य निवर्त्य अन्यत् स्पष्टार्थम् ॥ २२ ॥

स जरामरणक्षयं चिकीर्षुर्वनवासाय मतिं स्मृतौ निधाय ॥
प्रविवेश पुनः पुरं न कामाद्वनभूमेरिव मण्डलद्विपेंद्रः ॥ २३ ॥

स इति। जरामरणक्षयं चिकीर्षुः वनवासाय स्मृतौ मतिं निधाय द्विपेंद्रः वनभूमेः मंडलं इव पुनः पुरं नगरं प्रविवेश न कामात् ॥ २३ ॥

सुखिता बत निर्वृता च सा स्त्री
पतिरीदृक्त्वमिवायताक्ष यस्याः ॥
इति तं समुदीक्ष्य राजकन्या
प्रविशंतं पथि सांजलिर्जगाद ॥ २४ ॥

सुखितेति। आयताक्ष विशालनेत्र यस्यास्त्वमीदृक् पतिः सा स्त्री सुखिता सुखिनी निर्वृता परमानंदवती च इति राजकन्या सांजलिः सती पथि प्रविशंतं तं समुदीक्ष्य जगाद ॥ २४ ॥

अथ घोषमिमं महाभ्रघोषः परिशुश्राव शमं परं च लेभे ॥
श्रुतवांश्च हि निर्वृतेति शब्दं परिनिर्वाणविधौ मतिं चकार ॥२५॥

अथेति। महाभ्रघोषः मेघगंभीरवाक् इत्यर्थः इमं घोषं परिशुश्राव परं शमं शांतिं लेभे च। हि यतः निर्वृता इति शब्दं श्रुतवान् अतः निर्वाणविधौ मोक्षविधौ मतिं चकार ॥ २५ ॥

अथ कांचनशैलशृंगवर्ष्मा गजमेघर्षभबाहुनिस्वनाक्षः ॥
क्षयमक्षय धर्मजातरागः शशिसिंहाननविक्रमः प्रपेदे ॥ २६ ॥

अथेति। कांचनशैलशृंगवर्ष्मा मेरुशृंगतुल्यदेहः। गजः हस्ती मेघः अभ्रं ऋषभः वृषः तैः यथासंख्यं तुल्यः बाहुः निःस्वनः अक्षिणी यस्य सः गजतुल्यबाहुः।

१ C तं for नं. २ C स्मि. ३ H चकार बुद्धिम्. ४ C दु०. ५ H भूमाविव. ६ H दोषः. ७ H नुचि कण्ठीरवविक्रमः.

मेघतुल्यस्वनः वृषतुल्याक्षः इत्यर्थः। अक्षयधर्मे जातः रागः प्रेमा यस्य शशीव चंद्रमा इव आननं यस्य सिंह इव विक्रमो यस्य सः। क्षयं गृहं प्रपेदे ॥ २६ ॥

**मृगराजगतिस्ततोऽभ्यगच्छन्नृपतिं मंत्रिगणैरुपास्यमानम् ॥**
**समितौ मरुतामिव ज्वलंतं मघवन्तं त्रिदिवे सनत्कुमारः ॥२७॥**

मृगराजेति। त्रिदिवे मरुतां देवानां समितौ सभायां ज्वलंतं मघवंतं इंद्रं सनत्कुमार इव मंत्रिगणैः उपास्यमानं नृपतिं मृगराजगतिः सिंहगतिः अभ्यगच्छत् ॥ २७ ॥

**प्रणिपत्य च सांजलिर्बभाषे**
**दिश मह्यं नरदेव साध्वनुज्ञाम् ॥**
**परिविव्रजिषामि मोक्षहेतो-**
**र्नियतो ह्यस्य जनस्य विप्रयोगः ॥ २८ ॥**

प्रणिपत्येति। हि यतः अस्य जनस्य विप्रयोगः वियोगः नियतः अतः मोक्षहेतोः परिविव्रजिषामि ॥ २८ ॥

**इति तस्य वचो निशम्य राजा**
**करिणेवाभिहतो द्रुमश्चचाल ॥**
**कमलप्रतिमाञ्जलिं गृहीत्वा**
**वचनं चेदमुवाच बाष्पकंठः ॥ २९ ॥**

इतीति। तस्य तनयस्य इति पूर्वोक्तं वचः निशम्य राजा करिणा हस्तिना अभिहतः द्रुम इव वृक्ष इव चचालेत्यादि अन्वयः स्पष्टः ॥ २९ ॥

**प्रतिसंहर तात बुद्धिमेतां न हि कालस्तव धर्मसंश्रयस्य ॥**
**वयसि प्रथमे मतौ चलायां बहुदोषां हि वदन्ति धर्मचर्याम् ॥३०॥**

प्रतिसंहरेति। तात एतां बुद्धिं प्रतिसंहर हि यतः धर्मसंश्रयस्य तव अयं कालः न हि। प्रथमे वयसि चलायां मतौ बहुदोषा धर्मचर्या मोक्षमार्गसेवनमित्यर्थः वदन्ति ॥ ३० ॥

**विषयेषु कुतूहलेंद्रियस्य**
**व्रत खेदेष्वसमर्थनिश्चयस्य ॥**
**तरुणस्य मनश्चलत्यरण्या-**
**दनभिज्ञस्य विशेषतो विवेकम् ॥ ३१ ॥**

विषयेष्विति। विषयेषु कुतूहलेंद्रियस्य कौतुकवदिंद्रियस्य। व्रत इति निश्चये। खेदेषु दुःखेषु असमर्थनिश्चयस्य अदृढनिश्चयस्येत्यर्थः। विवेकं अनभिज्ञस्य। तदर्हमिति निर्देशात् कर्तृकर्मणोः कृतीति षष्ठ्या अनित्यत्वात् कर्मणि षष्ठी न भवति। एतादृशस्य तरुणस्य मनः अरण्यात् चलति ॥ ३१ ॥

---

१ H कमलप्रतिमेऽञ्जलौ, १ O मघवंतं, H मतचर्यास.

**मम तु प्रियधर्म धर्मकालस्त्वयि लक्ष्मीमवसृज्य लक्ष्यभूते ॥**
**स्थिरविक्रम विक्रमेण धर्मस्तव हित्वा तु गुरुं भवेदधर्मः ॥३२॥**

ममेति । हे प्रियधर्म लक्ष्यभूते त्वयि लक्ष्मीं अवसृज्य उत्सृज्य मम धर्मकालः अस्ति । हे स्थिरविक्रम स्थिरपराक्रम विक्रमेण विरुद्धक्रमेण व्युत्क्रमेणेत्यर्थः । गुरुं हित्वा तव धर्मः अधर्मः भवेत् ॥ ३२ ॥

**तदिमं व्यवसायमुत्सृज त्वं**
**भव तावन्निरतो गृहस्थधर्मे ॥**
**पुरुषस्य वयःसुखानि भुक्त्वा**
**रमणीयो हि तपोवनप्रवेशः ॥ ३३ ॥**

तदिति । इयं व्यवसायं मोक्षमार्गोपायाश्रयणम् । अन्यत् सुगमम् ॥ ३३ ॥

**इति वाक्यमिदं निशम्य राज्ञः**
**कलविंकस्वर उत्तरं जगाद ॥**
**यदि मे प्रतिभूश्चतुर्पु राजन्**
**भवसि त्वं न तपोवनं श्रयिष्ये ॥ ३४ ॥**

इतीति । कलविंकस्वरः चटकस्वरः । मंदस्वर इति यावत् । चतुर्पु वस्तुषु प्रतिभू लग्नकः भवसि चेत् तर्हि तपोवनं न श्रयिष्ये इति अन्वयः ॥ ३४ ॥

**न भवेन्मरणाय जीवितं मे**
**विरहेत्स्वास्थ्यमिदं च मे न रोगः**
**न च यौवनमाक्षिपेज्जरा मे**
**न च संपत्तिम पाहरेद्विपत्तिः ॥ ३५ ॥**

चतुर्षु वस्तुषु इत्युक्तं तान्येव आह–मे जीवितं मरणाय न भवेत् । कदापि मरणं मा प्राप्नोत्वित्यर्थः । रोगः इदं संप्रति विद्यमानं स्वास्थ्यं न विरहेत् न जह्यात् । रोगोपि कदा मा भूदित्यर्थः । मे यौवनं जरा न च क्षिपेत् न पातयेदित्यर्थः । च मम संपत्तिं विपत्तिः न अपाहरेत् ॥ ३५ ॥

**इति दुर्लभमर्थमूचिवांसं**
**तनयं वाक्यमुवाच शाक्यराजः ॥**
**त्यज बुद्धिमिमामतिप्रवृत्ता-**
**मवहास्यर्श्च मनोरथक्रमोऽयं ॥ ३६ ॥**

इतीति । इमां गतिप्रवृत्तां मोक्षमार्गप्रवृत्तां अथवा अतिप्रवृत्तां दुर्घटविषयेच्छावतीं तदेवाह अयं मनोरथक्रमः अवहास्यः ॥ ३६ ॥

---

१ C बभाषे. २ C विहरेत्स्वा०. ३ H न मे भवेत्. ४ C रोगः. H मिमां हरेद्वि. ६ H ०र्थमुक्तवंतं ७ C ०मां गतिप्र०. ८ C ०रथोऽतिमनो०.

अथ मेरुगुरुर्गुरुं बभाषे
यदि नास्ति क्रम एष नास्ति वार्यः ॥
शरणाज्ज्वलनेन दह्यमाना-
न्न हि निश्चिक्रमिषुं क्षमं ग्रहीतुम् ॥ ३७ ॥

अथेति । अथ मेरुगुरुः मेरुवत् दृढांगः गुरुं पितरं बभाषे यदि न एतत् तर्हि उपक्रमः वार्यः वारयितुं शक्यो नास्ति । तर्हि ज्वलनेन दह्यमानात् शरणात् गृहात् निश्चिक्रमिषुं निर्गन्तुमिच्छुं मामितिशेषः ग्रहीतुं क्षमं नास्ति । अग्नितुल्यजरा-मरणादिभ्यः भीतं मां को वा निवारयेदित्यर्थः ॥ ३७ ॥

जगतश्च यतो ध्रुवं वियोगो
न तु धर्माय वरं त्वयं वियोगः ॥
अवशं ननु विप्रयोजयेन्मा-
मकृतस्वार्थमतृप्तमेव मृत्युः ॥ ३८ ॥

जगत इति । जगतः यतः अवश्यं वियोगः परंतु धर्माय न । अयं तु वियोगः धर्माय अतः वरं । ननु जगतः वियोगेऽपि तव वियोगो न स्यात् अत आह अवशं मृत्स्वधीनमित्यर्थः । अकृतस्वार्थं अतएव अतृप्तं मां मृत्युः विप्रययोजेत् ॥३८॥

इति भूमिपतिर्निशम्य तस्य
व्यवसायं तनयस्य निर्मुमुक्षोः ॥
अभिधाय न यास्यतीति भूयो
विदधे रक्षणमुत्तमांश्च कामान् ॥ ३९ ॥

इति पूर्वोक्तप्रकारेण भूमिपतिः शुद्धोदनः निर्मुमुक्षोः तस्य तनयस्य व्यवसायं उद्योगं निशम्य श्रुत्वा भूयः न यास्यतीति अभिधाय उक्त्वा रक्षणं च उत्तमान् कामान् च विदधे चकारेत्यन्वयः ॥ ३९ ॥

सचिवैस्तु निदर्शितो यथाव-
द्बहुमानात्प्रणयाच्च शास्त्रपूर्वम् ॥
गुरुणा च निवारितोऽश्रुपातैः
प्रविवेशावसथं ततः स शोचन् ॥ ४० ॥

सचिवैरिति । सचिवैः यथावत् बहुमानात् प्रणयाच्च शास्त्रपूर्वं निदर्शितः ज्ञापितः गुरुणा च निवारितः अश्रुपातैः सह शोचन् अवसथं प्रविवेश ॥ ४० ॥

---

१ H भवेत्तु २ O दधा. ३ O द: for दे. ४ H वरोऽय. ५ H यदि वत्स. ६ H गुरुमे ध्दर्धदेः

चलकुंडलचुम्बिताननाभि-
र्घननिश्वासविकम्पितस्तनीभिः ॥
वनिताभिरधीरलोचनाभि-
र्मृगशावाभिरिवाभ्युदीक्ष्यमाणः ॥ ४१ ॥

स हि कांचनपर्वतावदातो हृदयोन्मादकरो वरांगनानाम् ॥
श्रवणांगविलोचनात्मभावान् वचनस्पर्शवपुर्गुणैर्जहार ॥ ४२ ॥

चलेति । चंचलकुंडलयुक्तगल्लाभिः घनः निबिडः यो निश्वासः तेन कंपिताः स्तनाः यासां ताभिः । अधीरलोचनाभिः चंचलनेत्राभिः वनिताभिः स्त्रीभिः मृगशावाभिरिव उदीक्ष्यमाणः स कांचनपर्वतावदातो मेरुपर्वतवत् स्वच्छः वरांगनानां स्त्रीणां हृदयोन्मादकरः श्रवणं स्वविषयगोष्ठीश्रवणं अंगविलोचनं शरीरविलोकनं तद्रूपान् आत्मभावान् आत्मविषयकचेष्टाः वचनस्पर्शवपुर्गुणैः वचनं भाषणं स्पर्शश्च एतैस्तद्रूपः वपुर्गुणैः जहार ॥ ४१ ॥ ४२ ॥

विगते दिवसे ततो विमानं
वपुषा सूर्य इव प्रदीप्यमानः ॥
तिमिरं विजिघांसुरात्मभासा
रविरुद्यन्निव मेरुमारुरोह ॥ ४३ ॥

विगते इति । आत्मभासा तिमिरं अंधकारं विजिघांसुः उद्यन् रविः मेरुमिव वपुषा सूर्य इव प्रदीप्यमानः स दिवसे विगते विमानं गृहविशेषं आरुरोह ॥ ४३ ॥

कनकोज्वलदीप्तदीपवृक्षं
वरकालागरुधूपपूर्णगर्भम् ॥
अधिरुह्य स वज्रभक्तिचित्रं
प्रवरं काञ्चनमासनं सिषेवे ॥ ४४ ॥

कनकेति । स कनकेन उज्वला दीप्तिर्येषां एतादृशाः दीपवृक्षा वृक्षाकृतिदीपा यस्मिन् । वरेण कालागरुधूपेन पूर्णः गर्भः यस्य । वज्रभक्तयः हीरकभागाः तैर्चित्राणि यस्मिन् । अथवा तैः चित्रं विचित्रं एतादृशं विमानमित्यर्थः आरुह्य प्रवरं कांचनं सौवर्णमासनं सिषेवे ॥ ४४ ॥

तत उत्तममुत्तमाश्च नार्यो
निशि तूर्यैरुपतस्थुरिन्द्रकल्पम् ॥
हिमवद्गिरिरसीरिन्द्रगौरा
द्रविणेन्द्रात्मजमप्सरोगणौघाः ॥ ४५ ॥

1 C ग्र for न. 2 C [illegible]

ततः इति । ततः निशि तूर्यैः उत्तमं इंद्रकल्पं तं उत्तमा नार्यः उपतस्थुः । अत्र दृष्टांतः हिमवद्गिरिः हिमालयः सीरिः बलरामः चंद्रश्च एते इव गौराः गौरवर्णाः अप्सरसां गणौघाः द्रविणेंद्रात्मजं कुबेरपुत्रं यथा ॥ ४५ ॥

परमैरपि दिव्यतूर्यकल्पैः
स तु तैर्नैव रतिं ययौ न हर्षम् ॥
परमार्थसुखाय तस्य साधो-
रभिनिश्चिक्रमिषा यतो न रेमे ॥ ४६ ॥

परमैरिति । परमैरपि दिव्यतूर्यकल्पैः दिव्यवाद्यतुल्यैः तैः स तु रतिं नैव ययौ हर्षं आनंदं न ययौ यतः तस्य साधोः परमार्थसुखाय निश्चिक्रमिषा निश्चयेन गंतुमिच्छा अतः न रेमे ॥ ४६ ॥

अथ तत्र सुरैस्तपोवरिष्ठैरकनिष्ठैर्व्यवसायमस्य बुध्वा ॥
युगपत्प्रमदाजनस्य निद्रा विहितासीद्विकृताश्च गात्रचेष्टाः ॥४७॥

अथेति । अथ तपोवरिष्ठैः अकनिष्ठैः सुरैः अस्य व्यवसायं बुध्वा युगपद् इत्यादि स्पष्टान्वयः ॥ ४७ ॥

अभवच्छयिता हि तत्र काचि-
द्विनिवेश्य प्रचले करे कपोलम् ॥
दयितामपि रुक्मपत्रचित्रां
कुपितेवांकगतां विहाय वीणाम् ॥ ४८ ॥

अभवदिति । काचित् दयितामपि रुक्मपत्रचित्रां अंकगतां वीणां कुपिता इव विहाय प्रचले करे कपोलं विनिवेश्य शयिता अभवत् ॥ ४८ ॥

विबभौ करलग्नवेणुरन्या
स्तनविस्रस्तसितांशुका शयाना ॥
ऋजुषट्पदपंक्तिजुष्टपद्मा
जलफेनप्रहसत्तटा नदीव ॥ ४९ ॥

विबभौ इति । अन्या करलग्नवेणुः स्तनविस्रस्तसितांशुका शयाना सती ऋजुना षट्पदानां पंक्त्या जुष्टानि सेवितानि पद्मानि कमलानि यस्याः सा: जलफेनेन प्रहसत्तटं यस्या एतादृशी नदीव विबभौ ॥ ४९ ॥

नवपुष्करगर्भकोमलाभ्यां
तपनीयोज्ज्वलसंगतांगदाभ्याम् ॥
स्वपिति स्म पुरःस्थितं भुजाभ्यां
परिरभ्य प्रियवन्मृदंगमेव ॥ ५० ॥

स्वपेति । तथा काचित् नवपुष्करगर्भकोमलाभ्यां नूतनकमलमध्यकोम-

१ C इत्येके १ C नव पु.

ताभ्यां तपनीयं सुवर्णं तद्वत् उज्ज्वले संगते संश्लिष्टे च अंगदे बाहुभूषणे ययोः ताभ्यां भुजाभ्यां प्रियवत् मृदंगमेव परिरभ्य आलिंग्य स्वपिति स्म ॥ ५० ॥

नवहाटकभूषणास्तथान्या वसनं पीतमनुत्तमं वसानाः ॥
अवशा बत निद्रया निपेतुर्गजभग्ना इव कर्णिकारशाखाः ॥ ५१ ॥

नवेति । तथा नवहाटकभूषणाः नूतनसुवर्णालंकाराः अन्याः निद्रया निपेतुरित्याद्यन्वयः ॥ ५१ ॥

अवलंब्य गवाक्षपार्श्वमन्या शयिता चापविभुग्नगात्रयष्टिः ॥
विरराज विलम्बिचारुहारा रचिता तोरणशालभञ्जिकेव ॥ ५२ ॥

अवलंब्येति । चापविभुग्नगात्रयष्टिः चाप इव धनुरिव विभुग्ना गात्रयष्टिः यस्याः अन्यत् स्पष्टम् ॥ ५२ ॥

मणिकुंडलदष्टपत्रलेखं मुखपद्मं विनतं तथापरस्याः ॥
शतपत्रमिवार्धवक्रनालं स्थितकारंडवघट्टितं चकाशे ॥ ५३ ॥

मणिकुंडलेति । मणिकुंडलेन दष्टाः पत्रलेखाः यस्य एतादृशं मुखपद्मं । अन्यत् स्पष्टम् ॥ ५३ ॥

अपराः शयिता यथोपविष्टाः स्तनभारैरवनम्यमानगात्राः ॥
उपगुह्य परस्परं विरेजुर्भुजपाशैस्तपनीयपारिहार्यैः ॥ ५४ ॥

अपरा इति । तपनीयस्य पारिहार्याः कटकादयो येषु तैः भुजपाशैः विरेजुः । अन्यत् स्पष्टम् ॥ ५४ ॥

महतीं परिवादिनीं च काचिद्वनितालिंग्य सखीमिव प्रसुप्ता ॥
विजुघूर्ण चलत्सुवर्णसूत्रां वदनेनाकुलकर्णिकोज्ज्वलेन ॥ ५५ ॥

महतीमिति । आकुलया कर्णिकया तालपत्रेण उज्ज्वलेन वदनेन इत्यादि स्पष्टम् ॥ ५५ ॥

पणवं युवतिर्भुजांसदेशा-
दवविस्रंसितचारुपाशमन्या ॥
सविलासरतांततांतमूर्वो-
र्विवरे कान्तमिवाभिनीय शिश्ये ॥ ५६ ॥

पणवमिति । अन्या युवतिः भुजांसदेशात् अवविस्रंसितचारुपाशं सविलासं यद्रतं तस्य अंते तांतं दांतं दीर्घं प्रनष्टहस्तपादमित्यर्थः । एतादृशं कांतमिव ऊर्वोः विवरे पणवं वाद्यविशेषं अभिनीय शिश्ये ॥ ५६ ॥

---

१ J कन्ठे. २ C है for के.

३ H महतीं परिवादिनीं विपंचीं वनितालिंग्य सखीमिवाधिकाचित् ॥
विजुघूर्ण चलत्सुवर्णसूत्रां वदनेनाकुलकर्णिकोज्ज्वलेन ॥

४ H °विलसत्सुचारुपाशमन्या.

अपरा न बभुर्निमीलिताक्ष्यो
विपुलाक्ष्योऽपि शुभभ्रुवोऽपि सत्यः ॥
प्रतिसंकुचितारविंदकोशाः
सवितर्यस्तमिते यथा नलिन्यः ॥ ५७ ॥

अपरा इति। अपराः विपुलाक्ष्योऽपि शुभभ्रुवोऽपि सत्यः निमिलिताक्ष्यो न बभुः। यथा सवितरि अस्तमिते सति नलिन्यः कमलिन्यः प्रतिसंकुचिताः अरविंदकोशाः यासां ताः तथेत्यर्थः ॥ ५७ ॥

शिथिलाकुलमूर्धजा तथान्या जघनस्रस्तविभूषणांशुकांता ॥
अशयिष्ट विकीर्णकंठसूत्रा गजभग्ना भुवि पातितेव मोचा ॥५८॥

शिथिलेति। शिथिला. अतएव आकुलाः मूर्धजाः केशाः यस्याः सा जघनाभ्यां स्रस्तानि विभूषणानि अंशुकान्तः वस्त्राग्रं च यस्याः सा गजभग्ना भुवि पतिता मोचा इव कदलीव अशयिष्टेत्यर्थः ॥ ५८ ॥

अपरास्त्ववशा ह्रियावियुक्ता
धृतिमत्योऽपि वपुर्गुणैरुपेताः ॥
विनिशश्वसुरुल्वणं शयाना
विकृताक्षिप्तभुजा जजृंभिरे च ॥ ५९ ॥

अपरा इति। अपरास्तु अन्यास्तु ह्रिया लज्जया वियुक्ता शयाना उल्वणं घोरं यथास्यात्तथा विनिशश्वसु। विकृताक्षिप्तभुजा. जजृंभिरे ॥ ५९ ॥

व्यपविद्धविभूषणस्रजोऽन्या
विसृताग्रंथनवाससोविसंज्ञाः ॥
अनिमीलितशुक्लनिश्चलाक्ष्यो
न विरेजुः शयिता गता सुकल्पाः ॥ ६० ॥

व्यपविद्धेति। व्यपविद्धाः विभूषणस्रजः यासां एतादृशः अन्या. विसृतं आग्रंथनं येषां एतादृशानि वासांसि वस्त्राणि यासां। गतासुकल्पाः सत्य. न विरेजुः अन्यत् सुगमम् ॥ ६० ॥

विवृतास्यपुटा विवृद्धगात्रा प्रपतद्वक्त्रजला प्रकाशगुह्या ॥
अपरा मदघूर्णितेव शिश्ये न बभासे विकृतं वपुः पुपोष ॥ ६१ ॥

विवृतेति। अपरा विवृतं आस्यपुटं यस्याः। प्रपतत् वक्त्रजलं यस्याः। मदेन घूर्णितेव ॥ ६१ ॥

इति सत्वकुलानुरूपरूपं विविधं स प्रमदाजनः शयानः ॥
सरसः सदृशं बभार रूपं पवनावर्जितरुग्णपुष्करस्य ॥ ६२ ॥

१ B बभुर्य्येऽशा.. २ C स्मा प्रतिसंकुचिता. ३ B विवेक.

इतीति । इति पूर्वोक्तप्रकारेण सत्वं धैर्यं कुलं वंशः तयोः अनुरूपं रूपं यस्य एतादृशं विविधं यथास्यात्तथा शयानः स प्रमदाजनः स्त्रीजनः पवनेन वायुना आवर्जितानि अतएव रुग्णानि पुष्कराणि कमलानि यस्मिन् एतादृशस्य सरसः सरोवरस्य सदृशं रूपं बभार ॥ ६२ ॥

**समवेक्ष्य ततश्च ताः शयाना विकृतास्ता युवतीरधीरचेष्टाः ॥**
**गुणवद्वपुषोऽपि वल्गुभासो नृपसूनुः स विगर्हयांबभूव ॥ ६३ ॥**

समवेक्ष्येति । अधीरचेष्टा यासां गुणवद्वपुषः सर्वगुणसंपन्नशरीरा इत्यर्थः । वल्गुभासः सुंदरतेजस्काः अन्यत् स्पष्टम् ॥ ६३ ॥

**अशुचिर्विकृतश्च जीवलोके वनितानामयमीदृशः स्वभावः ॥**
**वसनाभरणैस्तु वंच्यमानः पुरुषः स्त्रीविषयेषु रागमेति ॥ ६४ ॥**

ताः इति गर्हयां बभूवेत्युक्तं तदेव विशदयति अशुचिरित्यादिना । स्वभावः आत्मा । रागं प्रेमाणं । सुगममन्यत् ॥ ६४ ॥

**विमृशेद्यदि योषितां मनुष्यः प्रकृतिं स्वप्नविकारमीदृशं च ॥**
**ध्रुवमत्र न वर्धयेत्प्रमादं गुणसंकल्पहतस्तु रागमेति ॥ ६५ ॥**

विमृषेदिति । मनुष्यः योषितो प्रकृतिं यदि विमृषेत् ईदृशं स्वप्नतुल्यविकारं च यदि विमृषेत् सहेत तर्हि अत्र आसु योषित्सु प्रमादं तदधीनत्वरूपं ध्रुवं न वर्धयेत् । आसु गुणेषु यः संकल्पः प्राप्तीच्छादिकल्पना तेन हतस्तु ताडितस्तु रागं एति ॥ ६५ ॥

**इति तस्य तदंतरं विदित्वा निशि निश्चिक्रमिषा समुद्बभूव ॥**
**अवगम्य मनस्ततोऽस्य देवैर्भवनद्वारमपावृतं च चक्रे ॥ ६६ ॥**

इतीति । इति पूर्वोक्तप्रकारेण तत् अंतरं तदवकाशं इत्यर्थः । विदित्वा तस्य निश्चिक्रमिषा निर्गमनेच्छा निशि बभूव । ततः अस्य मनः देवैः अवगम्य ज्ञात्वा भवनद्वारं अपावृतं चक्रे ॥ ६६ ॥

**अथ सोऽवततार हर्म्यपृष्ठाद्युवतीस्ताः शयिता विगर्हमाणः ॥**
**अवतीर्य ततश्च निर्विशंको गृहकक्ष्यां प्रथमं विनिर्जगाम ॥ ६७ ॥**

अथेति । स शयिताः ताः युवतीः विगर्हमाणः सन् निर्विशङ्कः गृहकक्ष्यां प्रथमं विनिर्जगाम ॥ ६७ ॥

**तुरगावचरं स बोधयित्वा**
**जविनं छंदकमित्थमित्युवाच ॥**
**हयमानय कंठकं त्वरावा-**
**नमृतं प्राप्तुमितोऽद्य मे यियासा ॥ ६८ ॥**

---

१ C षे for शे २ H स्वस्त्ववुध्या. ३ H प्रसादं. ४ H ह्ययि for निशि. ५ C तै बभूव. ६ C गावेचरं. ७ C ष for ठ.

तुरगेति । तुरगानुचरं अश्वसेवकं जविनं वेगिनं छंदकं एतन्नामानं तुरगानुचरमित्यर्थः। किमुवाचेत्यपेक्षायामाह कंठकं एतन्नामानं हयं त्वरावान् त्वमित्यर्थः। आनय। अमृतं मोक्षं प्राप्तुं इतः अद्य मे यियासा यातुमिच्छा वर्तते इति शेषः ॥ ६८ ॥

हृदि या मम तुष्टिरद्य जाता
व्यवसश्च यथा तया धृतौ निविष्टः ॥
विजनेऽपि च नाथवानिवास्मि
ध्रुवमर्थोऽभिमुखः स मे य इष्टः ॥ ६९ ॥

हृदीति । अद्य मम हृदि या तुष्टिर्जाता तया धृतौ धैर्ये मति व्यवसाय. निश्चयः विनिष्टः उत्पन्नः। विजनेपि नाथवान् इव अस्मि। मे यः इष्टः अर्थः सः ध्रुवं निश्चयेन अभिमुखो वर्तते ॥ ६९ ॥

ह्रियमेव च सन्नतिं च हित्वा शयिता मत्प्रमुखं यथा युवत्यः॥
विवृते च यथा स्वयं कपाटे नियतं यातुमसौ ममाद्य कालः॥७०॥

ह्रियमिति। ह्रियं लज्जां संनतिं च हित्वा युवत्यः मत्प्रमुखं यथा शयिताः तथा स्वयं कपाटे विवृते च। अतः मम अद्य नियतं यातुं गंतुं असौ कालः अस्ति ॥ ७० ॥

प्रतिगृह्य ततः स भर्तुराज्ञां
विदितार्थोऽपि नरेन्द्रशासनस्य ॥
मनसीव परेण चोद्यमान-
स्तुरगस्यानयने मतिं चकार ॥ ७१ ॥

प्रतिगृह्येति। नरेंद्रशासनस्य विदितार्थोपि स भर्तुः आज्ञां प्रतिगृह्य मनसि परेण चोद्यमान इव तुरगस्य आनयने मतिं चकार ॥ ७१ ॥

अथ हेमखलीनपूर्णवक्त्रं लघुशय्यास्तरणोपगूढपृष्ठम् ॥
बलसत्वजवत्वरोपपन्नं स वराश्वं तमुपानिनाय भर्तुः ॥ ७२ ॥

अथेति। अथ हेम्नः सुवर्णस्य खलीनेन ( लगाम इति भाषायां ) पूर्णं वक्त्रं मुखं यस्य लघुशय्यास्तरणोपगूढपृष्ठं मृदुशयनास्तरणयुक्तपृष्ठं बलसत्वजवत्वरोपपन्नं वराश्वं भर्तुः उपानिनाय ॥ ७२ ॥

प्रततत्रिकपुच्छमूलपार्ष्णिं निभृतं ह्रस्वतनूजपृष्ठकर्णम् ॥
विनतोन्नतपृष्ठकुक्षिपार्श्वं विपुलप्रोथललाटकट्युरस्कम् ॥ ७३ ॥

प्रततेति । प्रततानि त्रिकादिकानि यस्येति बहुव्रीहिः त्रिकं पृष्ठवंशाधरः (माकडहाड)। ह्रस्वाः तनूजाद्यो यस्य। तनूजाः केशाः। विनतोन्नतं नम्रोच्चं पृ-

१ C यथा. २ C मुखे. ३ C प्रमनामयाप्स्कान्ड; II म for प्र. ४ C भर्त्रे.

प्रकुक्षिपार्श्वं यस्य । विपुलानि विशालानि प्रोथः अश्वघोणा ललाटं कटिः तस्य एतानि यस्य तं पूर्वोक्तमश्वमित्यर्थः ॥ ७३ ॥

**उपगुह्य स तं विशालवक्षाः कमलाभेन च सांत्वयन्करेण ॥**
**मधुराक्षरया गिरा शशास ध्वजिनीमध्यमिव प्रवेष्टुकामः॥ ७४॥**

उपगुह्येति । विशालवक्षाः सः शौद्धोदनिः कमलाभेन पद्मकांतिना करेण हस्तेन तं अश्वं सांत्वयन् सन् ध्वजिनीमध्यं सेनामध्यं प्रवेष्टुकाम इव मधुराणि अक्षराणि यस्यां तया गिरा भाषणेन शशास ॥ ७४ ॥

**बहुशः कलिशत्रवो निरस्ताः समरे त्वामधिरुह्य पार्थिवेन ॥**
**अहमप्यमृतं परं यथावत्तुरगश्रेष्ठ लभेय तत्कुरुष्व ॥ ७५ ॥**

किं शशास तदाह—बहुश इति । पार्थिवेन त्वां अधिरुह्य समरे युद्धे बहुशः कलिशत्रवः निरस्ताः नाशिताः । हे तुरगश्रेष्ठ अहमपि परं अमृतं यथावत् लभेय तत्कुरुष्व ॥ ७५ ॥

**सुलभाः खलु संयुगे सहाया विषयावाप्तिसुखे धनार्जने वा ॥**
**पुरुषस्य तु दुर्लभाः सहायाः पतितस्यापदि धर्मसंश्रये वा ॥७६॥**

सुलभा इति । संयुगे सहाया सुलभाः खलु तथा विषयावाप्तिसुखे धनार्जने वा सहायाः सुलभाः । धर्मसंश्रये आपदि पतितस्य पुरुषस्य तु सहायाः दुर्लभाः संति ॥ ७६ ॥

**इह चैव भवन्ति ये सहायाः कलुषेऽधर्मणि धर्मसंश्रये वा ॥**
**अवगच्छति मे यथान्तरात्मा नियतं तेऽपि जनास्तदंशभाजः॥७७॥**

इहेति । नास्ति धर्मो यस्मिन् एतादृशे कलुषे इह विषयरूपमार्गे धर्मस्य संश्रयो यस्मिन् मार्गे वा ये सहाया भवंति तेऽपि जनास्तदंशभाजः अधर्मांशभाजः धर्मांशभाजश्च इति मे अंतरात्मा अंतःकरणं नियतं अवगच्छति ॥ ७७ ॥

**तदिदं परिगम्य धर्मयुक्तं मम निर्याणमतो जगद्धिताय ॥**
**तुरगोत्तम वेगविक्रमाभ्यां प्रयतस्वात्महिते जगद्धिते च॥७८॥**

तदिति । तत् तस्मात् कारणात् मोक्षमार्गे गमनं सर्वहितावहमित्यस्मात् कारणात् धर्मयुक्तं ममनिर्याणं जगद्धिताय परिगम्य ज्ञात्वा हे तुरगोत्तम वेगः जवः विक्रमः पराक्रमः ताभ्यां हेतुभ्यां स्वात्महिते जगद्धिते च प्रयतस्व प्रयत्नं कुरु । स्वपरो भयहितप्रवृत्तस्य मम अनुकूल्याचरणे स्वपरो भयसाहाय्यं भविष्यतीत्यर्थः ॥ ७८ ॥

**इति सुहृदमिवानुशिष्य कृत्ये तुरगवरं नृवरो वनं यियासुः ॥**
**सितमसितगतिद्युतिर्वपुष्मान् रविरिव शारदमभ्रमारुरोह ॥७९॥**

---

१ C शः. २ C वास. ३ H स्वा for स्वा. ४ H सितमसितगतिद्युतिर्वपुष्मान्

इतीति । इति पूर्वोक्तप्रकारेण वनं यियासुः गंतुमिच्छुः नृवरः मुदृदमिव ह- ले सितं शुभ्रं तुरगवरं अनुशिष्य असिता अरमा गतिधृतिः गमनोत्साहो यस्य एतादृशः सन् अश्वं आरोह । अत्र दृष्टांतः रविः शारदमभ्रमिव ॥ ७९ ॥

अथ स परिहरन्निशीथचण्डं
परिजनबोधकरं ध्वनिं सदश्वः ॥
विगतहनुरवः प्रशांतहेष-
श्चकितविमुक्तपदक्रमं जगाम ॥ ८० ॥

अथेति । अथ आरोहणानंतरं सदश्वः स निशीथे चंडं भयंकरं परिजनबोध- करं ध्वनिं । पादानामितिशेषः । परिहरन् अकुर्वन् इत्यर्थः । विगतहनुरवः प्रशांत- हेषः शांतस्वजातीयशब्दः सन् चकित यथातथा विमुक्तः पदक्रमो यस्मिन् तत् यथातथा जगाम ॥ ८० ॥

कनकवलयभूषितप्रकोष्ठैः
कमलनिभैः कमलानि च प्रविध्य ॥
अवनततनवस्ततोऽस्य
यक्षाश्चकितगतैर्दधिरे खुरान् कराग्रैः ॥ ८१ ॥

कनकेति । कनकवलयभूषितप्रकोष्ठैः कमलनिभैः कराग्रैः अवनततनवः नम्र- देहाः यक्षाः चकितगतेः अस्य अश्वस्य खुरान् दधिरे इत्याद्यन्वयः ॥ ८१ ॥

गुरुपरिघकपाटसंवृता या
सुखमपि द्विरदैरपाध्रियन्ते ॥
व्रजति नृपसुते गतस्वनास्ताः
स्वयमभवन् विवृताः प्रतोल्यः ॥ ८२ ॥

गुरुरिति । गुरुः परिघः प्रतिबंधकाष्ठविशेषो येषां एतादृशानि यानि कपा- टानि तैः संवृताः आच्छन्नाः द्विरदैरपि हस्तिभिरपि सुखं न अपाध्रियंते न उ- द्घाट्यंते एतादृश्यः याः पुरः नगरस्य प्रतोल्यः अभ्यंतरमार्गाः ताः नृपसुते व्रज- ति गच्छति सति गतस्वना निःशब्दाः सत्य. स्वयमेव विवृताः अभवन् ॥ ८२ ॥

पितरमभिमुखं सुतं च बालं
जनमनुरक्तमनुत्तमां च लक्ष्मीम् ॥
कृतमतिरपहाय निर्व्यपेक्षः
पितृनगरात् स ततो विनिर्जगाम ॥ ८३ ॥

पितरमिति । अभिमुखं पितरं सुतं बालं शिशुं जनं अनुरक्तं प्रेमवंतमित्यर्थः । नास्ति उत्तमा यस्याः सा अनुत्तमा तां सर्वोत्तमामित्यर्थः । एतादृशीं लक्ष्मीं अप-

१ C प्रमी. २ C वृति॰.

हाय त्यक्त्वा कृतमतिः पूर्णबुद्धिः अतएव निर्व्यपेक्षः निरिच्छः स ततः पितृनगरात् विनिर्जगाम् ॥ ८३ ॥

अथ स विकचपंकजायताक्षः
पुरमवलोक्य ननाद सिंहनादम् ॥
जननमरणयोरदृष्टपारो ।
न पुनरहं कपिलाह्वयं प्रवेष्टा ॥ ८४ ॥

अथेति । अथ पुरनिर्गमनानंतरं विकचपंकजायताक्षः प्रफुल्लकमलदीर्घनेत्रः सः पुरमवलोक्य सिंहनादं ननाद । किं ननाद तत्राह—जननमरणयोः अदृष्टपारः अनवलोकितांतः कपिलाह्वयं एतन्नगरं पुनः अहं न प्रवेष्टा ॥ ८४ ॥

इति वचनमिदं निशम्य तस्य
द्रविणपतेः परिषद्गणा ननंदुः ॥
प्रमुदितमनसश्च देवसंघा
व्यवसितपारणमाशंसिरेऽस्मै ॥ ८५ ॥

इतीति । द्रविणपतेः कुबेरस्य परिषद्गणाः किन्नराः । व्यवसितस्य निश्चितस्य राज्यं हित्वा शौद्धोदनेः बहिर्निर्गमनरूपस्याभिप्रायस्य पारणं समाप्तिं । स्पष्टमन्यत् ॥ ८५ ॥

हुतवहवपुषो दिवौकसोऽन्ये
व्यवसितमस्य च दुष्करं विदित्वा ॥
अकृषत तुहिने पथि प्रकाशं
घनविवरप्रसृता इवेंदुपादाः ॥ ८६ ॥

हुतेति । हुतवहवपुष इति शौद्धोदनेः देवानां वा विशेषणं ज्ञेयं । तुहिने पथि शीतयुक्तमार्गे । हिमालये अतिशीतं अद्याप्यनुभूयते । घनस्य मेघस्य विवरात् अंतरालभागात् प्रसृताः इंदुपादा इव चंद्रकिरणा इव प्रकाशं अकृषत अकुर्वन् ॥ ८६ ॥

हरितुरगतुरंगवत्तुरंगः
स तु विचरन् मनसीव चोद्यमानः ॥
अरुणपरुषभावमंतरिक्षं
पवन इवैष जगाम योजनानि ॥ ८७ ॥

हरीति । हरितुरगस्य सूर्यस्य यस्तुरगः अश्वः तद्वत् सः तुरंगः मनसि चोद्यमान इव । यथा अस्य मनसि अभिप्रेतं तथा प्रेर्यमाण इवाश्वः । विचरन् संचरन् सन्

१ H मनसि च. २ C [illegible] ३ [illegible]

अरुणवत् परुषभावः काठिन्यं यस्मिन् एतादृशं अंतरिक्षं आकाशं पवन इव षड्-
ग्वि योजनानि जगाम ॥ ७७ ॥

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायश्रीगोपालचार्यान्ते वा-
सिना निगुडकरोपनामकनारायण ( दत्तात्रेय ) शर्मणा विरचितायां तत्त्वदीपि-
नाख्यायां बुद्धचरितसंक्षिप्तव्याख्यायां पञ्चमः सर्गः समाप्तः ॥ ॥ ॥

## Buddhacharita, Canto

### Notes and Translation.

बुद्धचरितम्—बुद्धस्य चरितं वर्ण्यते यस्मिन् तत् i. e. बुद्धचरितमधिकृत्य कृतं काव्यम् according to अधिकृत्य कृते ग्रन्थे *Pāṇi* IV. iii. 87. For particulars about बुद्ध see Introduction. महाकाव्यं—महत् च तत् काव्यं च महाकाव्यम्. A Kávya is defined variously but the most comprehensive definition is "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" *Ras. G.* The Buddhacharita can come in the class of Mahákávyas as it contains the requisite characteristics of that class of compositions. As defined by the Kávyádarsha they are:—

"सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ॥ आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥ १४ ॥ इतिहासकथोद्भूतमितरद्वा सदाश्रयं ॥ चतुर्वर्गफलायत्तं चतुरोदात्तनायकं ॥ १५ ॥ नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ॥ उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥ १६ ॥ विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः । मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥ १७ ॥ अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ॥ सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसंधिभिः ॥ १८ ॥ सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरंजकं ॥ काव्यं कल्पान्तरस्थायि जायेत सदलंकृति ॥ १९ ॥

The Sahitya Darpana is even more precise in the enumeration of the requisites of a Mahákavya. It says—

एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः । नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह । सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः । सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः । शृंगारवीरशान्तानामेकोऽङ्गी रस इष्यते । अंगानि सर्वेऽपि रसाः सर्वे नाटकसंधयः । कचिन्निन्दा खलादीनां सतां च गुणकीर्तनं । नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते । सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् । संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः । प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः । संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः । रणप्रयाणोपयममन्त्रपुत्रोदयादयः । वर्णनीया यथायोगं सांगोपांगा अमी इह ।

The Buddhacharita is a narration of the deeds of a hero who is क्षत्रियः and धीरोदात्तगुणान्वितः. The main *Rasa* running through the poem is शान्त. The poem is सर्गबद्ध. It is made up of sargas which are neither too long nor too short. It is made agreeable by सर्वैर्नाटकसन्धिभिः; it has कुमारोदयवर्णन as well as नगरवर्णन. As to

सर्गेते भाविसर्गस्य कथायाः सूचने the notes on the concluding stanzas of each Canto may be consulted. The Kávya, so far as has yet been discovered, does not contain more than eighteen Cantos yet there are good reasons to believe that the original did contain more than the required number. Taken all in all, it can safely aspire to a place among the Mahákávyas and contribute to increase the number of the popular "Pancha Máhá Kávyas." It opens with नमस्क्रिया ... वस्तुनिर्देश, which is one of the three forms of benedictions. Moreover, the use of the words श्रियं चन्द्रमा etc in the first stanza is itself auspicious according to "देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा."

ॐ—This sacred syllable called *Pranava* is uttered as an exclamation at the commencement of a prayer. It is explained in the *Ma'ndukya Upanishad* as made up of अ, उ, and म "अश्च उश्च मश्च तेषां समाहारः" 'अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः । मकारस्तु स्मृतो ब्रह्मा प्रणवस्तु त्रयात्मकः ॥' In the Vedas it is said to comprehend all the gods. It is एकाक्षरं ब्रह्म. It is said to signify the three spheres of the universe the three holy fires, the three steps of Vishnu, and the three Vedas—ओमित्येतत्त्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः । विष्णुक्रमास्त्रयस्त्वेते ऋक्सामानि यजूंषि च. ॥ The various results that its meditation produces are:—

इत्येतदक्षरं ब्रह्म परमोंकारसंज्ञितम् । यस्तु वेदयते सम्यक् तथा ध्यायति वा पुनः ॥ संसारचक्रमुत्सृज्य मुक्तसंचितबंधनः । अचलं निर्गुणस्थानं शिवं प्राप्नोत्यसंशयं । ओंकारं परमं ब्रह्म सर्वमन्त्रेषु नायकं । प्रजापतेर्मुखोत्पन्नं तप सिद्धस्य वै पुरा॥ यथा पर्णं पलाशस्य शङ्कुनैकेन धार्यते । जपेन दहते पापं प्राणायामैस्तथामलं ॥ ध्यानेन जन्मनिर्वाणं धारणाभिस्तु मुच्यते ॥

It is in short ब्रह्मन् in a single sound. For further information see *Aitareya Bráhman* V. 32, *Manu* II, 76 and *Gough's Upani.* pp. 68-74. रत्नत्रयाय—रत्नत्रय according to *Nágárjuna* is बुद्धो धर्मः संघश्चेति=the Buddha, the *Law* and the clergy. *Vide* 'Sacred Books of the East'. Vol. XIII, 83 *f.* and pp. 97-102.

———:0:———

**1 Prose Con.**—यस्य न उपमा स परार्ध्यां श्रियं विदधत् [अतः] त्रिधातुजित्, तमो निरस्यन् [अतः] अभिभूतभानुभृत्, निदाघं नुदन् [अतः] नितान्तचन्द्रमाः [एतादृशः] अर्हन् इह वन्दितः ।

**Notes**—उपमा—*Comparison, semblance*, parallel. परार्ध्या—immense, plentiful. 'परार्ध्यमग्र्यप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' *Amara*; for the use of the word *cf. Ja'naki* I. 1. श्रियम्—श्रीः affluence, wealth. I

would take the word in this sense instead of 'happiness' as has been done by Prof. Cowell, since the poet is describing the wealthy condition of the city. Moreover, I find no authority for 'happiness' as the meaning of the word. विधातृजित्—विधातारं जयति सः one who surpasses *Vidhâta*—the creator. तमोनिरस्यन्—तमः निरस्यते सः one who dispels darkness. The word तमस् *n.* signifies 'darkness' as opposed to light; *Cf. Meg.* I. 37. It is also used to signify 'ignorance or mental illusion'. "आत्मानमात्मनि नाम मेघो मन्युना भाजनम् । मत्प्रश्नेन पुनेषु तामसं वृत्तिमाश्रये" ॥ *Cf.* मम च मुक्तमिदं तमसा मनः *Sha.* VI. 7. तमो स्वान्तमतेन तुभ्यं प्रकाशनोनुदे । नमः *Jânaki* II. 16. अभिभूतभानुभृत्—भानून् (किरणान्) बिभर्ति सः भानुभृत् one possessing rays (भानुः रश्मिदिवाकरौ। *Amara*. *Cf.* सहस्रभानुः, अभिभूतः पराजितः भानुभृत् येन सः अभि॰—भृत् one who has thrown the sun in the shade *i. e.* excelled the sun. भृत् is used at the end of a word in the sense of 'possessing.' 'having' *Cf. Kir.* II. 44. निदाघ—heat, *fig.* worldly anxieties. नुदन् *pre. part.* of नुद् *Ubha* 1st Conj. to dispel, to drive away. *Cf.* भवत्स्वभावनुदनुदन्तं तमः *Mâ'.* I. 27; *Rig* VI. 63. निदाघकालोऽयमुपागतः प्रिये *Ritu* I. जितचारुचन्द्रमाः—जितः चारुचन्द्रमाः येन सः जित॰—चन्द्रमाः one who has excelled the pretty moon. अर्हत्—a perfected saint, a Buddha; one belonging to the highest rank in the Buddhistic hierarchy; see *Sarvadarshana Sangraha* p. 33.

The metre of the stanza is वंशस्थ.

**Translation.**—Here is saluted that Arhat who has no equal, who, in consequence of conferring abundance of wealth, surpasses the Creator—Brahmâ—who, as dispeller of darkness has excelled the sun; and who has put into insignificance the pretty moon by destroying all heat.

**2. Prose Con.**—महर्षेः कपिलस्य वास्तु पयोदपङ्क्त्या विशालोन्नतसानुलक्ष्म्या इव परीतपार्श्वं गगने अवगाढं उदग्रधिष्ण्यं पुरम् आसीत् ।

**Notes.**—महर्षेः=महांश्चासौ ऋषिश्च, तस्य The Rishis are classified as Rājarshi, Rishi, Maharshi and Bramharshi. A Rajarshi is a King or one belonging to the Military class who rises gradually step by step by continuous practice of religious austerities. For a more detailed information see *Râmâyana* I. 57 to 65. कपिलस्य—Kapila was a great sage said to have been the founder of the *Sânkhya* philosophy. वास्तु—Dwelling-place, residence. *Vâstu* is primarily the plinth on which a house is erected. *Amarasinha* gives this word to signify 'the site on which a house is erected. 'वेश्मभूर्वास्तुरस्त्रियाम्.' In the *Manusmriti* III. 17, it is used in

**Translation**:—*That city, possessing in every house a* brightness ( cast ) by the jewels ( studded ) in the ear of the lion on every gate-arch and on the raised seat in the court-yard, not finding an equal in the world, its emulation found scope in its own houses for outdoing each other.

**6. Prose con.**—अभिमानी शिशिरांशुः परिभूतपद्मान् रामामुखेन्दून् दृष्ट्वा एव सन्तापयोगात् वारि वेष्टुं पश्चात् समुद्राभिमुखं प्रतस्थे ।

**Notes.**—शिशिरांशुः = The moon, whose rays are specially described by Indian poets as being remarkably cool. Vide *Sha*. III. St. 2. *Janak*. III. 68. परिभूतपद्मान्=परिभूतानि पद्मानि यैस्तैस्तान्. It has been usual *to compare the face of a pretty woman with a lotus-*flower the latter being taken as an ideal standard of beauty. Here, however, the poet wishes to convey the idea that the faces of the women in the city were so beautiful and charming that they surpassed even the standard of comparison, *viz*. the moon. रामामुखेन्दून्=रामाणां मुखानि; तानि एव इन्दवः; तान्. रामा=a beautiful woman. 'सुन्दरी रमणी रामा' *Amara*. सन्तापयोगात्=in consequence of vexation. पश्चात्समुद्र is the western sea, *viz*. the Arabian sea called अपरान्तसागर in *Janaki*, III. 64. " निधाय तापं तपनः पतत्यसौ । त्रिलोल्यांचापरान्तसागरे " ॥.

The metre of the stanza is इंद्रवज्रा.

**Translation** —*The proud moon beheld the moon-faces of* the beauties ( of this city ) which had shamed the lotuses in consequence of the vexation ( at finding itself thus rivalled ) he started towards the western ocean to drown ( himself ) in its waters.

**7. Prose con** —जनेन शाक्यार्जितानां यशसां दृष्टान्तभावं गमितः अयं इन्दुः इति ( तत् ) पुरं चारुचलत्पताकैः ध्वजैः अस्य अङ्कं मार्ष्टुं उदयच्छत् ।

**Notes.**—जनेन by the people generally, the world. *Cf.* सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते *Sha*. V. 17. शाक्यार्जितानां—शाक्यैः अर्जितानि तेषां शाक्य the name of the family of Buddha. अर्जित obtained, acquired; from अर्ज् 10th *Conj*. *Paras*. to acquire, gain. यशसां *Gen. plu* of यशस् *n*. fame. दृष्टान्तभावं—दृष्टान्त is used here in the sense of 'example,' 'illustration'; the rhetorical sense may also do *Cf.* पूर्णचन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः *Mo*. II. 31. दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्विवेकाश्रितानाम् *Shatas'loki* I. चारु०-पताकैः-चलन्त्यः च ताः पताकाश्च चल०—पताकाः; चारवः च०—पताकाः येषां तैः having pretty fluttering banners. ध्वजैः—ध्वज may be taken to be the whole flag consist-

ing of the pole and the banner-cloth while पताका may be taken to signify the latter. अस्य *i. e.* of the moon. अंक the black spot on the disc of the moon which has been so largely made the subject of description by Sanskṛt poets. See *inter alia* Nai. I. 6 and 8. मार्ष्टुं—*infi.* of मृज् 1st. *Conj. Paras.* to wash, to wipe off. उद्यच्छत्—Strove, endeavoured.

The metre is उपजाति in which the first, second, and fourth quarters are इंद्रवज्रा and the third is उपेंद्रवज्रा.

**Translation.**—The moon was put by the people into the position of an object of comparison for the glories gained by *Shákya*: the city, therefore, strove to wipe off the dark spot (on the disc) of the moon by means of its flags having beautiful waving banners.

**8. Prose con.**—यत् रात्रौ रजतालयस्थैः इन्दोः करैः कुमुदप्रहासं भूत्वा अपि दिवा सौवर्णहर्म्यागतपादैः सरोजद्युति आलम्बे ।

**Notes.**-रजतालयस्थैः-रजतस्य (रजत *n.* silver) आलयानि (आलय house) तेषु तिष्ठन्ति ते तैः. इन्दोः करैः-by means of the rays of the moon (कर *m.* a ray, बलिहस्तांशवः कराः *Amara.*) कुमुदप्रहासं=कुमुदानां (कुमुद is a variety of the lotus which is said to open under the influence of the rays of the moon. *cf.* कुमुदान्येव शशांकः सविता बोधयति पंकजान्येव *Sha.* V. 28. also *Vikra.* III, 16. प्रहास.-(For the use of हस् in the sense of blooming or opening as also for the popular notion of some lotuses opening under solar rays *cf.* भास्वानुदेष्यति हसिष्यति पंकजश्रीः as also हसद्भिरुन्नीर-प्रसूनैः ). दिवा—*indecl.* during day-time; in the day. सौवर्णहर्म्यागत-पादैः-सौवर्णहर्म्येषु (हर्म्य *n.* a mansion.) हर्म्यादि धनिनां वासः *Amara. cf.* बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या *Me.*) आगताः पादाः (पाद *m.* a ray पादा रश्म्यङ्घ्रितुर्यांशाः *Amara cf.* भुजोच्छ्रायमिवाग्रहस्तं *Ma.* IV. 34. पादानिन्दोरमृतशिशिरान् *Me.*) तैः. सरोजद्युतिम्=सरोजस्य ( सरोज *n.* सरसि जातम् सरोजम् a day-lotus ) द्युतिः ( द्युति *f.* beauty *cf.* सरोरुहद्युतिमुषः *Ratna'.* I. 30 ). आलम्बे=*perf.* 3rd *per. sing.* of लम्ब् with आ.

The metre is उपजाति in which the first, second, and third quarters are इंद्रवज्रा and the fourth quarter is उपेंद्रवज्रा.

**Translation.**—During night the city had the blooming of night lotuses by the rays of the moon striking on the silvery (white) mansions while during day-time it gained the beauty of the opened day-lotuses by the rays of the sun falling on its golden palaces.

**9. Prose con.**—महीभृतां मूर्ध्नि कृताभिषेकः यः अर्कबन्धुः शुद्धोदनः नाम नृपः (सः) स्फुटपुण्डरीकः शुद्धाशयः दयार्द्रचेता. तत् (पुरं) अलंचकार।

**Notes.**-महीभृतां=*Gen. plu.* of महीभृत्= (महीं बिभर्ति इति the supporter of the world, (1) a king; (2) a mountain. Hindu mythology says that the earth is supported by mountains. मूर्ध्नि=(*Loc sing.*) of मूर्धन् 1. the head; 2. the top, summit). कृताभिषेकः—कृतः अभिषेकः यस्य सः 1. one who has been anointed according to certain rites and installed as a king. In this sense the Locative of the 'post of authority is used. *cf* सोऽटवीराज्येऽभिषिक्तः *Hito.* II; also *Vikra:* V, 23. This accounts for the Locative of मूर्ध्नि, which is 'the post of authority' here. 2. कृतः अभिषेकः येन सः one who has showered water. *cf.* अथ वपुरभिषेक्तुं तास्तदाम्भोभिराशु. *Māg.* VII. 75. शुद्धोदन—father of Buddha. अर्कबन्धुः—1. Name of S'ákya Muni as being born in the solar race. 2. अर्कः (the sun) बन्धुः ( kins-man ) यस्य सः he whose friend is the sun *viz.* the cloud. The interdependence between solar rays and the clouds seems to have been well known to the ancients. *Cf.* the *Shruti* 'आदित्याज्जायते वृष्टिः. शुद्धाशयः—शुद्धः आशयः यस्य सः one having a pure heart, mind. For the use of आशय in this sense, *cf.* अहमात्मा गुडाकेश सर्वभूताशयस्थितः *Bh gita* X. 20, आशयस्य सदृशी समुद्रजन् *M. Vira.* II. 37. शुद्धश्चासौ आशयश्च a clean reservoir. *Cf.* विषमोऽपि विगाह्यते नय कृततीर्थः पयसामिवाशयः *Ki* I, 3, where Malli. explains आशय by ह्रद. स्फुट० रीकः=(1) स्फुटं (full-blown, expanded, opened. *Cf.* स्फुटपरागपरागतपङ्कजम् *Mā.* VI, 2. स्फुटसरोजवना जवना नदीः *Kir.* V. 7.) पुण्डरीकं ( white umbrella as the insignia of royalty ) यस्य सः. (2) स्फुटानि पुण्डरीकाणि यस्मिन् सः. that which contains full-blown lotuses. स्फुट may also be taken to signify 'distinctly visible, prominent' as in स्फुटच-द्रतारका विभावरी *Kum.* V, 44. and नभसः स्फुटतारस्य रात्रेरिव विपर्ययः *Ma'* XI, 44. स्फुट means also 'white' "स्फुटो व्यक्तस्फुटयोः सिते व्याप्ते " *Haima*, as in मुक्ताफलं वा स्फुटविद्रुमस्थं *Kum* I. 44; but this sense seems hardly needed since पुण्डरीक by itself signifies a white lotus as well as a white umbrella; पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे *Medini.* The reading वा would make a better sense than च by taking वा in the sense of वा उपमायां. Prof. Cowell takes स्फुटपुण्डरीक to agree with पुराधिराज which is his reading. If the reading स्फुटपुण्डरीकं पुराधिराजं be adopted स्फुटपुण्डरीकं will not go with शुद्धाशय. and does not make a very happy sense, since lotuses are found in lakes and reservoirs. दयार्द्रचेताः—दयया आर्द्रं चेतः यस्य सः whose heart is moved by compassion. This applies both to the

The metre is उपजाति in which the first and fourth quarters are उपेंद्रवज्रा and the second and third quarters are इंद्रवज्रा.

**Translation.**—A monarch of the solar race, named Shuddhodana, annointed as suzerain lord over all kings, with his white umbrella, having pure motives and a heart full of kindness, adorned the city.

**10. Prose con.**—भूभृत्परार्ध्योऽपि ( असौ शुद्धोदनः ) सपक्षः एव प्रवृत्तदानः अपि मदानुपेतः; ईशः अपि नित्यं समदृष्टिपातः; सौम्यस्वभावः अपि पृथुप्रतापः ( आसीत् ).

**Notes.**—भूभृत्परार्ध्यः—भूभृत्सु परार्ध्यः (1) foremost among rulers; (2) foremost among mountains. अपि has a disjunctive force. If Shuddhodana was the best he really did not stand in need of an army or retinue. Likewise, for an account of the foremost among mountains being clipped of his wings see *Rāmāyana* Sundar Kānda and *Bhartri*,I, 35. सपक्षः (1) Having an army. (2.) Having wings 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः' *Medini*. प्रवृत्तदानः=(1) Making charity as in दानेन पाणिर्न तु कङ्कणेन *Bhartri*. (2) Having streaks of ichor. (दानं गजमदे त्यागे पालनच्छेदशुद्धिषु *Medini*.) *cf.* घनसदानसदाननदन्तिनम् *Mag.* V, 9; दानाम्बुराजिरिव गन्धगजस्य नाशे *Mudrā*. also *Ra.* XVI. 3. मदानुपेतः=(1) Devoid of pride: (2) Destitute of rut. ईशः=(1) Lord, king: (2) Shiva the three-eyed or odd-eyed god. ईशः स्वामिनि रुद्रे च *Halā*. समदृष्टिपातः=(1) Having an equal eye for all. Having an equal number of eyes, *i e.* having two eyes. सौम्यस्वभावः अपि=though possessing a mild temper. पृथुप्रतापः=(1) Having excessive heat. (2) Having great fame, full of majesty. *Cf. Jan.* I, 15; and स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम *K. Pra.* X.

The metre is इंद्रवज्रा.

**Translation.**—This sovereign lord, Shuddhodana, though foremost among kings, had a large train of attendants, through intent upon liberality was free from pride; even as a ruler he had an equal eye for all, though of a gentle disposition he was yet full of valour.

*N. B.* The adjectives and adjectival phrases have another sense too:—

Though foremost among the bearers of the Earth he was yet possessed of wings; though he had ichor flowing down his temples he was yet free from fury; though *Isha* yet he had no more

than an even number (a pair) of eyes; though gentle by nature yet he had excessive heat.

**11. Prose con.**—यस्य भुजेन समराङ्गणेषु अभिहताः (अत एव) पतन्तः द्विपद्विपेन्द्राः उद्भ्रान्तमुक्ताप्रकरैः शिरोभिः भक्त्या एव पुष्पाञ्जलिप्रणेमुः।

**Notes.**—द्विपद्विपेन्द्राः=द्वाभ्यां पिबति स द्विपः; द्विपानां इन्द्राः द्विपेन्द्राः; द्विपाः द्विपेन्द्राः. इन्द्र is used as the last member of a compound to indicate the best of a class. उद्भ्रान्तमुक्ताप्रकरैः मुक्तानां प्रकराः (heaps, collections *Cf.* मुक्ताफलप्रकरमाजि गुहागृहाणि *Ma.* V. 12; and *Ku.* V. 68.) उद्भ्रान्ताः (thrown out) मुक्ताप्रकराः यैः तानि: तैः. The heads of elephants are said to contain pearls; *vide. Kum.* I, 9, and *Mallinatha* thereon. पुष्पा०—पुष्पाणां अञ्जलयः तामिः *vide Ratna.* I, 10.

The metre is उपजाति in which the first and second quarters are उपेंद्रवज्रा and the third and fourth quarters are इंद्रवज्रा.

**Translation.**—The great elephants of the enemy, falling down in consequence of being struck by his hand in the arena *of battle, bowed down, as it were, in homage with their heads* pouring forth quantities of pearls as if they were offerings of hand-fuls of flowers.

**12. Prose con.**—उग्रप्रतापात् महान्धकारान् इव शत्रून् अवधूय (असौ) तिग्मरश्मिः समन्तात् जनं आश्रयणीयमार्गं प्रदर्शयन् उद्योतयामास।

**Notes.**—उग्रप्रतापात्—उग्र fierce, intense:; for प्रताप see St. 10. अवधूय removing, getting the better of. *Cf.* व्रजन्ति शत्रूनवधूय निःस्पृहाः *Kir.* I, 42. तिग्मरश्मिः—तिग्माः (powerful) तिग्मं तीक्ष्णं खरम् *Amara.* रश्मयः (rays) यस्य सः. The reading तिग्मभानुः would be perferable since it means the sun as well as a powerful king. In the latter sense it may be dissolved as तिग्मश्चासौ भानुश्च. समन्तात्—*ind.*—on all sides, round about. आश्रयणीय *Pot. parti.* to be practised, followed. उद्योतयामास—Shone.

The metre is उपजाति and same as in stanza 7.

**Translation.**—Having dispersed his enemies by his pre-eminent prowess just like thick darkness this *glorious sun* shone in all directions to point out to his subjects the path which was worth being followed.

**13. Prose con.**—अस्य नीत्या धर्मार्थकामाः विततं अन्यं देशं न आचक्रमुः; (किन्तु) तूर्णसिद्धौ मिथः विस्पर्धमानाः इव स्वगोचरे दीप्ततराः बभूवुः।

**Notes.**—नीत्या—नीति management, guidance. धर्मार्थकामाः=धर्म virtue, righteousness; अर्थ wealth, worldly prosperity; काम de-

